मया मुहुर्मुहुर्याद कुण्डले मार्गिते अपि । जितशत्रुर्नवीनायै जायायै सादरं ददौ ॥ १५४ ॥
" प्रायेण मनुजो वस्तु पराचीनं ल्सच्चमम् । मुक्त्वा वस्तुनि सततं नवीने कुरुते रुचिम् ॥ १५५ ॥
स्वाधीने च कलत्रे नीचः परदारलम्पटो भवति । [1]संपूर्णेऽपि तटाके काकः कुम्भोदकं पिबति ॥ १५६ ॥
अष्टापदादितीर्थेषु गच्छन्तं मेदिनीपतिम् । कलावतीयुतं वीक्ष्या–गदमित्थं नृपाग्रतः ॥ १५७ ॥
चिरन्दिषा चिरं मेऽस्ति नन्तुमष्टापदेऽर्हताम् । तेन त्वां प्रार्थये स्वामिन् ! सार्धं नयनतोऽधुना ॥ १५८ ॥ यतः—
"कर्तुः स्वयं कारयितुः परेण तुष्टेन [2]भावेन तथाऽनुमन्तुः । साहाय्यकर्त्तुश्च शुभाशुभेषु तुल्यं फलं तत्त्वविदो वदन्ति ॥" १५९
राजा निरुत्तरीकृत्य तां नव्यगृहिणीयुतः । अष्टापदादितीर्थेषु यात्रां कृत्वाऽऽगमद् गृहम् ॥ १६० ॥
नवीनान्यन्यदा सर्वा–भरणानि महीपतिः । अकारयत्कलावत्या नचैकमपि मे तदा ॥ १६१ ॥
सपत्न्या भूषणान्येक्ष्य प्रोक्तं पत्युः पुरो मया । ममापि कारय स्वामिन् ! भूषणानि नवानि च ॥ १६२ ॥
श्रुत्वैवं भृकुटीं कृत्वा जजल्पेति महीपतिः । एतत्त्वया न वक्तव्यं वाञ्छत्या हितमात्मनः ॥ १६३ ॥
एवं कलावतीसक्त–मानसेन महीभुजा । कदापि पूरितस्तस्मिन् भवे मे न मनोरथः ॥ १६४ ॥ यतः—
"[3]हत्थी दम्मइ संवच्छरेण मासेण दम्मइ तुरगो । महिलाए किर पुरिसो दमए एगेण दिवसेण ॥ १६५ ॥
जे नामंति न सीसं कस्सवि भुवणे वि जे महासुहडा । रागंधा गलिअबला रुलंति महिलाण चरणतले ॥ १६६ ॥

१ स्वच्छोदके- क २. [illegible]चित्तेन क ३. हस्ती दम्यते संवत्सरेण मासेण दम्यते तुरगः । महिलाया किल पुरुषो

मरणे वि दीणवयणं माणधरा जे नरा न जंपंति । ते वि हु कुणंति लल्लिं बालाणं नेहगहगहिला ॥ १६७ ॥

हरि-हर-चउराणण-चंद-सूर-खंदाइणो वि जे देवा । नारीण किंकरत्तं कुणंति धि ध्दी विसयतण्हा ॥ १६८ ॥

आर्त्तध्यानपरैवाह-[1]मपूर्णेच्छा मृता ततः । पञ्चमके भवेऽभूवं मृगी मलयपर्वते ॥ १६९ ॥

आर्त्ते तिर्यग्गतिस्तथा गतिरधो० ॥ १७० ॥

तत्राप्येको मृगो मेऽभूत पतिर्दुष्टतराराशयः । यद् यदहं तदाऽवोचं तत्तदङ्गीचकार न ॥ १७१ ॥ यतः—

"[2]जं चिअ विहिणा लिहिअं तं चिअ परिणमइ सयल लोअस्स । इअ जाणेविण धीरा विहुरे वि न कायरा हुंति ॥" १७२

चरन्ती विपिनेऽन्येद्यु-र्निरीक्ष्य मुनिमेककम् । शान्तं दान्तं तदाऽभूवं जातिस्मृत्या युना चिरात् ॥ १७३ ॥

ततोऽहं भावतो नित्यं वितन्वाना नुतिं मुनेः । अवोचमिति मे पत्युः कुरङ्गस्य पुरोऽन्यदा ॥ १७४ ॥

स्वामिन् ! अस्मिन्वने साधु-रेकस्तिष्ठति शान्तिमान् । तस्य प्रणामतः पापं याति पूर्वभवार्जितम् ॥ १७५ ॥

" साधूनां दर्शनं श्रेष्ठं तीर्थभूता हि साधवः । तीर्थं पुनाति कालेन सद्यः साधुसमागमः ॥" १७६ ॥

तेन त्वं व्रज तत्रैव वन्द्यते स मुनीश्वरः । इत्युक्तः स क्रुधा प्राह रक्तनेत्रश्च मां प्रति ॥ १७७ ॥

---

दाम्पत्येकेन दिवसेन॥ ये नामयन्ति न शीर्षं कस्यापि भुवनेऽपि ये महासुभटाः। रागान्धा गलितमन्ता लुठयन्ति महिलानां चरणतले ॥ मरणेऽपि दीनवचनं मानधरा ये नरा न जल्पन्ति । तेऽपि खलु करोति लल्लिं (चाटु) बालानां स्नेहग्रहग्रहिलाः ॥ हरि-हरि-चतुरानन-चन्द्र-सूरस्कन्दादयोऽपि ये देवाः । नारीणां किंकरत्वं कुर्वन्ति धिक् धिक् विषयतृष्णा ॥

१. मपूर्तेच्छा. ख. २. यदेव विधिना लिखितं तदेव परिणमति सकललोकस्य । इति ज्ञात्वा धीरा विधुरेऽपि न कातरा भवन्ति॥

रे ! दुष्टे ! पण्डितंमन्ये एव मम पुरोऽधुना । उपदेशं ददन्ती त्वं निर्लज्जे किं न लज्जसे ? ॥ १७८ ॥
इत्युक्त्वाऽहं हता तुर्य-भवे तेन दुरात्मना । शुभध्यानात्प्रथमे स्वर्गे-ऽभूवं देवी विभावसोः ॥ १७९ ॥
ठाण उच्चुच्चयर मज्झं हीण च हीणतरग वा , जेण जहिं गंतव्व चिट्ठा वि से तारिसी होइ ॥" १८० ॥
विभावसुः सुरः सोऽपि पूर्वपत्नीत्वचोरतः । मदीयोक्तं मनाग् नैव मन्यतेऽत्यन्तदुष्टहृत् ॥ १८१ ॥ यतः—
" 'ईसा-विसाय-मय-कोह-माया-लोभेहिं एवमाईहिं । देवा वि समभिभूआ तेसिं कुत्तो सुह नाम ॥'' १८२ ॥
मयोक्तमन्यदा स्वामिन् ! ममास्ति शाश्वतार्हतः । नन्तुमिच्छा च तेन त्वं ता च पूरय सम्मतिं ॥ १८३ ॥
तेनेति धर्षिता गाढ-मह दुष्टात्मना तदा । अत पर न वक्तव्यं भवत्यैव मया सह ॥ १८४ ॥
ततोऽहं मौनमाधाय निन्दन्ती कर्मणः स्थितिम् । स्वर्गायुर्निखिलं पूर्ण-कार्यं दुःखेन पूरिता ॥ १८५ ॥ यतः—
"ज विहि करइ स होइ होइ न ज जीअ चिंतवइ । ईमई चिंति पडेइ आहट्ट दोहट केवला ॥" १८६ ॥
ततश्च्युत्वा तृतीयेऽहं भवे पद्मपुरे पुरे । मुकुन्दाह्वद्विजप्रीति-पत्नीगर्भे समागमम् ॥ १८७ ॥
प्रीतिः पूर्णदिनेऽसूत सुखेन तनया तदा । कृत्वा जन्मोत्सवं पित्रा दत्त नाम मनोरमा ॥ १८८ ॥
क्रमेण वर्द्धमानाऽहं पाठिता, सकलाः कलाः । तथाऽभूवं लसद्धर्म-कर्मशास्त्रविशारदा ॥ १८९ ॥ यतः—

---

१ स्थानमुच्चोच्चतर मध्यं हीन च हीनतरकं वा । येन यत्र गन्तव्यं चेष्टाऽपि तस्य तादृशी भवति ॥
२ ईर्ष्या-विषाद-मद-क्रोध-माया लोभैरेवमादिभि । देवा अपि समभिभूतास्तेषा कुत सुखं नाम ॥

जाएण जीवलोए दो चेव नरेण सिक्खिअव्वाइं । कम्मेण जेण जीवइ जेण मओ सुगइं जाइ ॥ १९० ॥
झोषाभिधपुरे देव–शर्म्मणश्च द्विजन्मनः । सदुत्सवमहं दत्ता तातेन हितकाङ्क्षिणा ॥ १९१ ॥
निरन्तरं द्विजः सोऽपि रात्रिभोजनतत्परः । स्नानादिना जलं भूरि क्षिपन् हन्ति च पूतरान् ॥ १९२ ॥
संहारं कुरुते कुंन्थु–कीटिकादितनूमताम् । भूयो भूरिपयःपूर–प्लावितावनिमण्डलात् ॥ १९३ ॥
मयोक्तं कान्त ! सन्धाना–नन्तकायादिभक्षणात् । जीवहिंसाविधानाच्च लभन्ते कुगतिं जनाः ॥ १९४ ॥
यतः पुराणेऽप्युक्तम्—
" कूपेषु अधमं स्नानं । वापीस्नानं च मध्यमम् । तटाके वर्जयेत् स्नानं नद्यां स्नानं न शोभनम् ॥ १९५ ॥
गृहे चैवोत्तमं स्नानं जलं चैव च शोधितम् । तथा त्वं पाण्डवश्रेष्ठ ! गृहे स्नानं समाचर ॥१९६॥
आत्मा नदी संयमतोयपूर्णा, सत्यावहा शीलतटा दयोर्मिः । तत्राभिषेकं कुरु पाण्डुपुत्र ! न वारिणा शुद्ध्यति चान्तरात्मा ॥
चित्तम(स्या)न्तर्गतं पापं तीर्थस्नानैर्न शुद्ध्यति । शतशोऽपि जलैर्धौतं सुराभाण्डमिवाशुचि ॥१९८॥
संवत्सरेण यत्पापं कैवर्तस्य च जायते । एकाहेन तदाप्नोति अपूतजलसङ्ग्रही ॥१९९॥
दृष्टिपूतं न्यसेत्पादं वस्त्रपूतं जलं पिबेत् । सत्यपूतं वदेद्वाक्यं मनःपूतं समाचरेत् ॥ २०० ॥
चत्वारो नरकद्वारा प्रथमं रात्रिभोजनम् । परस्त्रीगमनं चैवं सन्धानानन्तकायिके ॥२०१॥

---

१- जातेन जीवलोके द्वे एव नरेण शिक्षितव्ये । कर्मणा येन जीवति येन मृतो सुगतिं याति ॥ २. कम्थु. क.

पुत्रमांसं वरं भुक्तं न तु मूलकभक्षणम् । भक्षणान्नरकं गच्छेद् वर्जनात् स्वर्गमाप्नुयात् ॥ २०२ ॥
अस्तंगते दिवानाथे आपो रुधिरमुच्यते । अन्नं मांससमं प्रोक्तं मार्कण्डेन महर्षिणा ॥" २०३ ॥ इत्यादि ।
एवमुक्तोऽपि बहुशो दुष्टात्मा जीवमर्दनात् । विरराम मनाग् नैवाभव्यजीव इव द्विजः ॥ २०४ ॥ यतः—
"वज्रलेपस्य मूर्खस्य नारीणां मर्कटस्य च । [1]एकाग्रहस्तु मीनानां नीली-मद्यपयोस्तथा ॥" २०५ ॥
अन्येद्युः कुत्रचिद् ग्रामा-दानीता शाटिकाऽद्भुता । मार्गितापि भृशं नैव तेन मह्यं ददे तदा ॥ २०६ ॥
एवं दुरात्मनाऽपूरि तेन मे न मनोरथः । यावज्जीवं ततो जाता दुःखयुक्ताऽहमन्वहम् ॥ २०७ ॥ यतः—
" चिन्तातुराणां न सुखं न निद्रा क्षुधातुराणां न वपुर्न तेजः । अर्थातुराणां न सुहृन्न बन्धुः कामातुराणां न भयं न लज्जा॥
दुर्ध्यानेन ततो मृत्वा मलयाचलकानने । शुकी भार्या शुकस्याहं द्वितीयतो भवेऽभवम् ॥ २०९ ॥
मयोक्तं प्रसवानेहा वर्तते कान्त ! साम्प्रतम् । तेन नीडं क्वचिद् वृक्षे क्रियते सुखहेतवे ॥ २१० ॥
एवमुक्तोऽपि नो वक्ति साऽलसो यावता भृशम् । ततो मया कृतं नीडं यत्नतश्च शमीतरौ ॥ २११ ॥
तत्रावयोः क्रमाज्जात-मपत्यद्वितयं वने । आनीयाहं फलाद्यम्बु वर्द्धयामासिवान् तदा ॥ २१२ ॥
एकदोक्तं मया स्वामिन् ! भक्ष्यं किञ्चित्समानय । बहूक्तोऽप्यलसः सोऽपि जगाम नैव कुत्रचित् ॥ २१३ ॥
अत्रान्तरे वने वंश-घर्षोत्पन्नविभावसुः । दहन् वृक्षान् तृणादीनि नीडासन्नं समाययौ ॥ २१४ ॥

---

१. एकग्रहस्तुमीनानां क । एको ग्रहस्तु ख ।

मया मोक्तमयं ज्वाला-जटालो दहनोऽभितः । आयात्यत्र ततोऽपत्य-मेकैकं गृह्यते करे ॥ २१५ ॥

एवमुक्तोऽपि बहुशः स शुकोऽलसशेखरः । मौनमाधाय नोत्तस्थौ तावत्तत्रागतोऽनलः ॥ २१६ ॥

उत्थाय स शुको दूरं दुष्टात्मा जग्मिवान् क्वचित् । गृह्णानाऽहं करेऽपत्ये दग्धा तेन दवाग्निना ॥ २१७ ॥ यतः—

" किं करोति नरः प्राज्ञः प्रेर्यमाणः स्वकर्म्मभिः । प्रायेण हि मनुष्याणां बुद्धिः कर्मानुसारिणी ॥" २१८ ॥

ततः पूर्वार्जितश्रेयः-प्रभावादिह सं(सद्)गतौ । सालवाहनभूपस्य सुताऽभूवं सुकोमला ॥ २१९ ॥

श्रीयुगादिजिनागारे चित्रस्थं विशदं शुकम् । यतनतो मम पश्यन्त्या जातिस्मृतिरजायत ॥ २२० ॥

ततः पूर्वभवान् सप्त जातिस्मृत्याऽवगम्य च । जाताऽहं द्वेषिणी पुंसु साम्प्रतं विक्रमाङ्गने । ॥ २२१ ॥ यतः—

" सुख-दुःख-मद-द्वेषा-हंकार-सरलतादयः । सर्वं शिष्टमशिष्टं च जायते पूर्वकर्म्मतः ॥" २२२ ॥

विक्रमाऽवग् महाभागे ! सत्यमेतत्त्वयोदितम् । यो यस्मिन् कुरुते द्वेषं द्वेष्यस्तस्य स जायते ॥ २२३ ॥

तत्र श्रवःसुखकरं विनिशम्य तस्या-गीतमपश्रमखिलं नरनाथपुत्री ।

हृष्टा वितीर्य मणिमेकमनन्तमूल्यं सूर्योदये सपदि तां विससर्ज नारीम् ॥ २२४ ॥

रत्नं विवाहसामग्री- सत्यंकारसहोदयम् । लात्वा हृष्टा निजे स्थाने विक्रमा समुपागमत् ॥ २२५ ॥ यतः—

सेत्स्यमानं निजं कार्यं मानसेप्सितमञ्जसा । मोदते मनुजो वीक्ष्य मयूरीव इवाम्बुदम् ॥ २२६ ॥

पुरतो भट्टमात्राग्नि-वेतालयोः स्वचेष्टितम् । उक्त्वा च विक्रमः प्राह गम्यते साम्प्रतं वने ॥ २२७ ॥

कृत्वा तत्रादन यश्यां भुक्त्वाप्य च ते ततः । निर्गत्य बहिरुद्याने–ऽध्यास्था ययुरञ्जसा ॥ २२८ ॥
गुटिकायाः प्रभावेन नरीभूतास्तत्त्रय. । विक्रमार्कोऽग्निवेतालं प्रति प्राहति रञ्जत. ॥ २२९ ॥
अवन्त्या घोटकान् पञ्च मुक्त्वा च द्वे पणाङ्गने । कमलापार्श्वतो दिव्य शृङ्गारत्रयमानय ॥ २३० ॥ यत'—
हचिराडम्बरात्कार्यं सर्वं सिद्धयति देहिनाम् । इत्युक्तो विक्रमार्केणा–चालीद् वेतालकासुरः ॥२३१॥ यत —
' सती पत्यु' प्रभोः पत्तिः गुरो शिष्यः पितु' सुत' । आदेशे संशयं कुर्वन् खण्डयत्यात्मनो व्रतम् ॥ " २३२ ॥
न विना पार्थिवो भृत्यैर्न भृत्याः पार्थिवं विना । तेषा यो व्यवहारोऽय परस्परनिबन्धनम् ॥ २३३ ॥
युद्धकालेऽग्रगो य' स्यात् सदा पृष्ठानुगः पुरे । प्रभोर्द्वाराश्रितो हर्म्ये स भवेद्राजवल्लभ' ॥ २३४ ॥
तत्र मुक्त्वाऽग्निवेताल. पञ्चाश्वान् द्वे पणाङ्गने । शृङ्गारत्रितय दिव्य–मानीयादात् महीपते ॥ २३५ ॥
ततोऽवग् विक्रमादित्यः कृत्य न मायया विना । सिद्धयतीति जिनाधीश–सदने गम्यतेऽधुना ॥ २३६ ॥
सालवाहनभूपालो जिनभक्तोऽस्ति सन्ततम् । तेन जिनाधिपस्याग्रे नृत्य सद्य' करिष्यते ॥ २३७ ॥
सालवाहनभूपाल–कारिते ऋषभप्रभोः । प्रासादे विक्रमार्कोऽगात् ताभ्या युक्तो दिनात्यये ॥ २३८ ॥
भूयसीं भक्तिगर्भेण गीतस्तुत्यादिना निशि भावनां भावयामास विक्रमार्को भवच्छिदम् ॥ २३९ ॥ यतः—
" दारिद्र्यनाशन दान शील दुर्गतिनाशनम् । अज्ञाननाशिनी प्रज्ञा भावना भवनाशिनी ॥ २४० ॥
सुप्त्वोत्थायोदये भानोः प्राहेति विक्रमार्यमा । सर्वज्ञपुरतो नृत्य करिष्यामोऽधुना वयम् ॥ २४१ ॥

यदा वामश्रयाङ्गुष्ठं चालयामि तदा द्रुतम् । गच्छेस्त्वमग्निवेताल ! कृत्वा वामांसयोश्च खे ॥ २४२ ॥
वामहस्ताङ्गुलीसंज्ञां करिष्याम्यहमम्बरात् । तदोत्तीर्य विधातव्यं पुनर्नृत्यं जिनाग्रतः ॥ २४३ ॥
एवमुक्त्वा त्रिभिर्नृत्य-मर्हतोऽग्रे च मण्डितम् । यावत्तावत्समायातः पूजाकारोऽर्हतोऽर्चितुम् ॥ २४४ ॥
देवरूपाधिकश्रीकान् तान् दृष्ट्वा नृत्यतत्परान् । दध्याविति तदा पूजाकारश्चित्ते चमत्कृतः ॥ २४५ ॥
किमेते निर्जराः किं वा शिष्टा विद्याधराः पुनः । स्तोतुं जिनं च पाताल-कुमाराः किं समागताः ? ॥ २४६ ॥
पूजाकारो नृपोपान्ते गत्वैवमूचिवान् द्रुतम् । राजन् ! अद्य जिनागारे दिव्यरूपास्त्रयः सुराः ॥ २४७ ॥
कुर्वाणा नर्त्तनं सन्ति नानागीतादिभङ्गिभिः । विलोक्यतां द्रुतं तेन तत्र गत्वा महीपते ! ॥ २४८ ॥
निशम्यैतन्महीपालः प्रहृष्टस्तान्निरीक्षितुम् । ययौ सारपरीवारो युगादिजिनमन्दिरे ॥ २४९ ॥
यावत्पश्यति भूपाल-स्तावत्ते च त्रयः सुराः । उत्प्लुत्य पूर्वसङ्केतात् ययुः सुरवर्त्मनि ॥ २५० ॥
राजा प्रोवाच भो देवा! अकृत्वा नर्त्तनं यदि । गमिष्यथ तदा हत्यां करिष्येऽहं निजात्मनः ॥ २५१ ॥
भूपालयाचनात्तेऽपि समुत्तीर्य नभोऽङ्गणात् । चक्रुर्नृत्यं जगज्जन्तु-चमत्कृतिकरं द्रुतम् ॥ १५२ ॥
तादृशं नृत्यमालोक्य प्रोवाचेति महीपतिः । एकदा च सभामध्ये यूयं नृत्यं करिष्यथ ॥ २५३ ॥
ततः सर्वत्र मे कीर्ति-पूरः प्रसरति क्षितौ । सालवाहनभूपाल-सभायां ननृतुः सुराः ॥ २५४ ॥ यतः—
" अधमा धनमिच्छन्ति धन-मानौ च मध्यमाः । उत्तमा मानमिच्छन्ति मानो हि महतां धनम् ॥ २५५ ॥

देव–दानव–गन्धर्व–मेदिनीपति–मानवाः । त्रैलोक्यव्यापका कीर्ति–मिच्छन्ति धवला सदा ॥ २५६ ॥
क यूयमिति भूपोक्ते वय विद्याधराः खगाः । जिनेन्द्रपुरतो नित्य (नृत्य) कुर्मोऽन्यत्र न कर्हिचित् ॥ २५७ ॥ यतः—
"सर्वज्ञो जितरागादि-दोषस्त्रैलोक्यपूजित । यथास्थितार्थवादी च देवोऽर्हन् परमेश्वर. ॥ २५८ ॥
ध्यातव्योऽयमुपास्योऽय–मय शरणमिष्यताम् । अस्यैव प्रतिपत्तव्य शासन चेतनाऽस्ति चेत् ॥ २५९ ॥
वीतराग स्मरन् योगी वीतरागत्वमश्नुते । सराग ध्यायतस्तस्य सरागत्व तु निश्चितम् ॥ २६० ॥
येन येन हि भावेन युज्यते यन्त्रवाहक । तेन तन्मयता याति विश्वरूपो मणी यथा (र्णियथा) ॥" २६१ ॥
सालवाहनभूपोऽवग् लोकाना सन्ततेः पुर । नृत्य च' कुर्वता दोषो लगिष्यति मनाग् नहि ॥ २६२ ॥
यूयं देवधियाऽस्माक पुरो नृत्य करिष्यथ । तदा च भवता दोषो लगिष्यति ननु स्फुटम् ॥ २६३ ॥
ततो विक्रमविद्याभृत् माहेति भूपतेः पुरः । अस्माक वनितारूपे दृष्टे प्राणात्ययो भवेत् ॥ २६४ ॥
तेनेद नहि वक्तव्य साम्प्रत भवता नृप ! । यदीच्छा स्यात्तदाऽत्रैव भावनृत्य करिष्यते ॥ २६५ ॥
भूपोऽवग् निखिला नारीः क्षेप्स्यामि गृहमध्यतः । तत्र नृत्यकृते यूय शाक् प्रसन्ना भविष्यथ ॥ २६६ ॥
वादयित्वा ततो भूप. पटहं निखिले पुरे । स्थापयामास गेहान्तः सद्यः सर्वा मृगेक्षणाः ॥ २६७ ॥
तथा कृते महीशेन नृत्यतस्तान् सुरान् पथि । नारीद्विपान्निशम्येति पप्रच्छ भूपभू' सखीम् ॥ २६८ ॥
हे सरो( खि ! ) किं महीपालः कोष्ठागारे स्त्रियोऽखिलाः । क्षेपयामास के नृत्य करिष्यन्ति सभान्तरे ॥ २६९ ॥

सख्याहामी सुरा वाम–भ्रुवां रूपं मनागपि । न पश्यन्ति नृपास्थायां तैश्च नृत्यं करिष्यते ॥ २७० ॥
ततः प्रागवनीपाल–पुत्री पुंवेषधारिणी । नृत्यं द्रष्टुं द्रुतं गत्वा नृपास्थायामुपाविशत् ॥ २७१ ॥
नृत्यन्तस्ते सुरा दिव्य–रूपवेषादिधारिणः । सालवाहनभूपाल–युतास्तत्राययुः क्रमात् ॥ २७२ ॥
चमत्कारकरं नृत्यं तैर्देवैर्विहितं तथा । यथा भूपादयो लोका जातास्तल्लीनमानसाः ॥ २७३ ॥
भूपोऽवग् भो ! सुरा ! किञ्चित् युष्मान् प्रक्ष्याम्यहं मनाक् । यदि यूयं सहिष्यध्वे मदुक्तं कटु कर्णयोः ॥ २७४ ॥
विद्याभृद् विक्रमः प्राह–राजन् ! यद् रोचते तव । वक्षि तत्त्वं गताशङ्कः सहिष्येऽहं मुमुक्षुवत् ॥ २७५ ॥
राजा प्रोवाच सर्वेषां देवानां सन्ति योषितः । भवतोऽभूत्कथं रोषः स्त्रीषु तज्जल्प कारणम् ॥ २७६ ॥
विक्रमाह्वः सुरः प्राह पापिष्ठा दुष्टचेतसः । निर्लज्जाश्च दुराचारा निर्घृणाः सन्ति योषितः ॥ २७७ ॥ यतः—
“ सम्मोहयन्ति मदयन्ति विडम्बयन्ति निर्भर्त्सयन्ति रमयन्ति विषादयन्ति ।
एताः प्रविश्य सदयं हृदयं नराणां किं नाम वामनयना न समाचरन्ति ॥ २७८ ॥
अनृतं साहसं माया मूर्खत्वमतिलोभना । निःस्नेह–निर्दयत्वे च स्त्रीणां दोषाः स्वभावजाः ॥” २७९ ॥
सालवाहनभूपालः प्राहैवं त्वं कथं वद । विक्रमोऽवक् ततः स्पष्टमिति भूमीपतेः पुरः ॥ २८० ॥
सुकोमलोदितं सर्वं विक्रमार्को व्यतिक्रमात् । जजल्पेति तदा सद्यो भूपतेः पुरतः स्फुटम् ॥ २८१ ॥
इतश्च सप्तमे पूर्वे भवे लक्ष्मीपुरेऽनघे । आसीच्छ्रेष्ठी धनो नाम्ना श्रीमती गृहीणी पुनः ॥ २८२ ॥

तयोर्बभूव सत्स्वप्न-सूचितो नन्दनोऽन्यदा । कृत्वा जन्मोत्सवं चक्रे कर्मणेत्यभिधापदम् ॥ २८३ ॥
व्यवसायं वितन्वानो बभूव धनवान् घनः । अर्थिभ्यश्च ददौ दानं भूयिष्ठं धर्मतत्परः ॥ २८४ ॥
धर्मपराङ्मुखा पत्नी श्रीमती मम दुष्टवाग् । जल्पन्ती सततं यत्तत् मदुक्तं नाकरिष्यत ॥ २८५ ॥
अर्थिभ्यो न ददौ दानं प्रेरिताऽपि मया प्रिया । भुक्तं न सुन्दरं क्वापि पर्वण्यन्यत्र का कथा ॥२८६॥
इत्यादि सुकोमलोक्त्या सप्तमभवकथा विक्रम-विद्याधरो व्यतिरेकेण जजल्प ।
चम्पापुर्यां भवेऽभूवं षष्ठे च जितशत्रुराट् । पद्माह्वा गृहिणी तत्र प्रतिकूलाऽभवन्मम ॥ २८७ ॥
अत्रापि षष्ठभवकथा व्यतिरेकेण विक्रमविद्याधरो जगौ भूपतेः पुरः ॥
पञ्चमेऽपि भवेऽभूवं मृगोऽहं मलयाचले । । मृगी पत्न्यभवत्तत्र प्रतिकूला सदा मम ॥ २८८ ॥
अत्रापि मृगभवसम्बन्धिनीं सुकोमलोक्त्या (कथा) विक्रमार्कविद्याधरो व्यतिरेकेण प्राह ।
तृतीये देवशर्माह्वो द्विजः पद्मपुरेऽभवम् । मनोरमाऽभिधा तत्र प्रतिकूला प्रियाऽभवत् ॥ २८९ ॥
अत्रापि तृतीयभवे द्विजसम्बन्धिनीं कथा सुकोमलोक्त्या व्यतिरेकेण जजल्प ।
द्वितीये च भवे नूनं कीरो मलयपर्वते । । तत्राप्यजनि मे पत्नी प्रतिकूला सदा शठा ॥ २९० ॥
मयोक्तं प्रसवावेला वर्त्तते पत्नि ! तेऽधुना । तेन नीडं क्वचिद् वृक्षे क्रियते सुखहेतवे ॥ २९१ ॥
एवमुक्ताऽपि नावादीत् सालसा यावता भृशम् । ततो मया कृतं नीडं यत्नतः शमिपादपे ॥ २९२ ॥

तत्रावयोः क्रमाज्जात-मपत्यद्वितयं च यत् । आनीयाहं फलाद्यम्बु [1]वर्द्धमायामासिवांस्तदा ॥ २९३ ॥
एकदोक्तं मया पत्नि ! भक्ष्यं किञ्चिदिहानय । बहूक्ताऽप्यलसा सा [2] च नैवागात् कुत्रचित्तदा ॥ २९४ ॥
अत्रान्तरे वने वंश-घर्षोत्पन्नविभावसुः । दहन् वृक्षतृणादीनि नीडपार्श्वे समाययौ ॥ २९५ ॥
मया प्रोक्तमयं ज्वाला-[3]जटालो दहनोऽभितः । एष्यत्यत्र ततोऽपत्य-मेकैकं गृह्यते करे ॥ २९६ ॥
एवमुक्ताऽपि बहुशः सा शुक्यलसशेखरा । मौनमाधाय नोत्तस्थौ तावत्तत्रागतोऽनलः ॥ २९७ ॥
उत्थाय सा शुकी दूरं ययौ पापा वने क्वचित् । गृह्णानोऽहं करेऽपत्ये दग्धस्तेन दवाग्निना ॥ २९८ ॥ यतः—
“ पूर्वभवार्जितश्रेयोऽश्रेयोभ्यां प्राणिनोऽखिलाः । लभन्ते सुखदुःखे च भ्रमन्तश्च चतुर्गतौ ॥ २९९ ॥
शुक्लध्यानवशान्मृत्वा भूरिविद्याधरः परः । जातोऽहं निर्ज्जरस्तस्याः शुक्या न ज्ञायते गतिः ॥ ३०० ॥
एवं षट्सु भवेष्वात्म-शक्त्या यात्राद्युपाकृतिः । मया तस्याः कृता शश्वत् स्वभावेन कृतात्मना ॥ ३०१ ॥
तस्याः पूर्णीकृतास्तेषु भवेष्वपि मनोरथाः । तया पापिष्ठयाऽकारि मदुक्तमेकशोऽपि न ॥ ३०२ ॥
श्रुत्वैतत् मुदिता स्वान्ते बाढं प्राहेति [4]भूपसूः । त्वं दुरात्मा गतो नंष्ट्वाऽऽगते दावानलेऽलसः ॥ ३०३ ॥
अपत्यद्वयसंयुक्ता दग्धा तेन दवाग्निना । मृत्वा चास्य महीशस्याभूवं पुत्री सुकोमला ॥ ३०४ ॥
देवः प्रोवाच मा कूटं जल्पेदानीं पुरो मम । यद्यपत्यद्वयी युक्ता दग्धा त्वं दववह्निना ॥ ३०५ ॥

---

१. वर्धयामास तं तदा. ख. २. साराव नै. क. । ३. जटिलो. क. । ४. भूपभूः ख. ॥

तदाऽपत्यद्वय मह्य सद्यः सम्प्रति दर्शय । नो हि चेद् दर्शयिष्यामि ते अपत्ये तवाधुना ॥ ३०६ ॥
ददर्शेति तया प्रोक्तो सुरः प्राह ममान्तिके । पश्यापत्यद्वय तच्च पूर्वमेते मया सह ॥ ३०७ ॥
श्रुत्वैतद्वचन तस्य दध्यावेव सुकोमला । विभङ्ग विद्यते ज्ञानं ममास्य सत्यमेव तु ॥ ३०८ ॥
तयोरेव वचो युक्ति-युक्त श्रुत्वा तदा स्फुटम् । भूपादयोऽखिला लोका श्चित्ते चमत्कृता भृशम् ॥ ३०९ ॥
एवमुक्त्वा त्रयो देवा यावज्जग्मुर्नभोङ्गणे । तावत्प्राहेति भूपाल पुत्री स्पष्ट पितु पुरः ॥ ३१० ॥
यद्ययं मा सुरो नैव परिणेष्यति सम्प्रति । तदैवाह करिष्यामि सद्यो हत्या निजात्मन ॥ ३११ ॥
पुत्र्याः पुरुषविद्वेषि-भाव त्यक्त तदा नृप । निरीक्ष्य मुमुदेऽत्यन्त-मुद्गते दुमिवाम्बुधिः ॥ ३१२ ॥
मत्वा कदाग्रहं पुत्र्या भूपः प्राह सुर प्रति । भो ! देव ! त्वमिमा पुत्रीं परिणीयाधुना व्रज ॥ ३१३ ॥
नो चेदहं कुटुम्बेन युक्तः सन्नस्तवोपरि । आत्महत्या करिष्यामि मरिष्यति सुताऽपि च ॥ ३१४ ॥
देहि देवाधुना सद्योऽभयदानं कृपापर । अस्माकं सचिवाना च पुत्र्याश्च जीवितं पुनः ॥ ३१५ ॥
ज्ञानवान् ज्ञानदानेन निर्भयोऽभयदानत । अन्नदानात्सुखी नित्य निर्व्याधिर्भेषजाद्भवेत् ॥ ३१६ ॥
श्रुत्वैतन्निर्भरो भूप-स्त्रीहत्याभयतस्तदा । आत्मीयकार्यनिष्पत्ते-र्भवनाच्च मुदं व्यधात् ॥ ३१७ ॥
भद्रमात्रा गिवेताल-सयुक्तो व्योममण्डलात् । उत्तीर्य प्राह गीर्वाणभाषया भूपतेः पुर ॥ ३१८ ॥

१ त म- क ।

अहं देवस्त्वियं नारी कथं योगो भवेद्दद । यतो हि विद्यते योगः सदृशेन शरीरिणाम् ॥ ३१९ ॥ यतः—

" ययोरेव समं वित्तं ययोरेव समं श्रुतम् । तयोर्मैत्री विवाहश्च नतु पुष्ट-विपुष्टयोः ॥ ३२० ॥

१ मृगा मृगैः सङ्गमनुव्रजन्ति, गावश्च गोभिस्तुरगास्तुरङ्गैः । मूर्खाश्च मूर्खैः सुधियः सुधीभिः समानशीलव्यसनेषु योगः॥"३२१

दृष्ट्वा भूपोऽवनिस्पृष्ट-पदद्वन्द्वं सुरं तदा । दध्याविति नरः कोऽपि कोऽपि विद्याधरोऽथवा ॥ ३२२ ॥

विद्यासिद्धोऽथवा मन्त्र-तन्त्रसिद्धः समागतः । न विद्यतेऽमरो नेत्र-मीलोन्मीलनतोऽत्र नु ॥ ३२३ ॥

६ " अणिमिसनयणा मणकज्जसाहणा पुप्फदामअमिलाणा । चउरंगुलेण भूमिं न छुवंति सुरा जिणा बिंति ॥३२४॥

पंचसु जिणकल्लाणेसु महरिसितवाणुभावाओ । जंमंतरनेहेण य आगच्छंती सुरा इह यं ॥" ३२५ ॥ इत्यादि ।

स्मृत्वैवं नृपतिस्तस्मै महामहपुरस्सरम् । दत्त्वा पुत्रीं ददौ सप्तभूमिकं धवलालयम् ॥ ३२६॥

इति श्रीमत्तपागच्छनायकश्रीसोमसुन्दरसूरिपट्टालङ्करणपरमगुरुगच्छनायकश्रीमुनिसुन्दरसूरिशिष्यशुभशीलगणिविरचिते श्रीविक्रमादित्यचरित्रे सुकोमलापाणिग्रहस्वरूपो द्वितीयः सर्गः ॥

---

१. अनिमिषनयना मनःकार्यसाधना पुष्पदामाम्लाना । चतुरङ्गुलेन भूमिं न स्पृशन्ति सुरा जिना ब्रुवते ॥
पञ्चसु जिनकल्याणेषु महर्षितपोऽनुभावात् । जन्मान्तरस्नेहेन चागच्छन्ति सुरा इह ॥

## अथ तृतीयः सर्गः ॥



अथ श्रीविक्रमादित्यः कृतकृत्यः प्रमोदितः । भट्टमात्राग्निवेताला–न्या(वा)कार्यैति जगौ रहः ॥ १ ॥
मनसा चिन्तितं कार्यं सान्निध्याद् युवयोः क्रमात् । सिद्धिमागान्ममेदानीं दुःशकं मरुतामपि ॥ २ ॥ यतः—
३ " सा सा सम्पद्यते बुद्धिः सा मतिः सा च भावना । सहायास्तादृशा ज्ञेया यादृशी भवितव्यता ॥ ३ ॥
न स मन्त्रो न सा बुद्धि–र्न स दोष्णा पराक्रमः । साध्यते नहि यः सार–बुद्धिभिश्च भवादृशैः ॥ ४ ॥
श्रियमनुभवन्ति धीरा न भीरवः किमपि पश्य शस्त्रहताः । कर्णः स्वर्णालङ्कृति–र(म)ञ्जनरेखाङ्कितं चक्षुः ॥"५ ॥
६ ततो रहोऽग्निवेताल–भट्टमात्रपुरो नृपः । प्राहेति पुरमात्मीयं कोऽप्यरातिर्हनिष्यति ॥ ६ ॥
तदा को रक्षिता नास्ति तस्यां युष्मद्धुना ततः । भट्टमात्र ! पुरीं पातु भवान् गच्छतु वेगतः ॥ ७ ॥
अदृश्यस्त्वमग्निवेताला–त्रस्थो देहि ममादनम् । यथा पल्याद्य सर्वे जानन्तीति जना हृदि ॥ ८ ॥
९ अथ देवोऽथवा विद्या–धरो नहि पुनर्नरः । आवामपि गमिष्यावो जातेऽवसरे द्रुतं पुरि ॥ ९ ॥
एवमुक्ते ययौ भट्ट–मात्रोऽवन्तीं पुरीं रयात् । विक्रमार्कोऽग्निवेताल–सहितस्तत्र तस्थिवान् ॥ १० ॥
भुक्तं दृष्ट्वाऽग्निवेतालो यात्यदृश्यो रहः सदा । सालवाहनभूपालः पप्रच्छ क्व गतो सुरी ॥ ११ ॥

विक्रमार्कः सुरः प्राह जग्मतुः क्रीडितुं क्वचित् । भोक्तुमाकारितो भूमि--भुजा माहेति विक्रमः ॥ १२ ॥

अन्नाहारमहं नैव करोमि भूपते । कदा । नृदत्तं फलपुष्पादि--बलिं गृह्णामि सुन्दरम् ॥ १३ ॥

दत्त्वा कर्पूरकस्तूरी--चारुपुष्पफलं बलिम् । जामाताऽयं जगद्वन्द्यो ध्यायन्नेवं नृपो ययौ ॥ १४ ॥

दत्तेयं पुत्रिकेदृक्ष--वराय मयकाऽधुना । भविष्यत्यग्रतो भाग्य--योगतः सुखिनी किल ॥ १५ ॥ यतः—

" कुलं च शीलं च सनाथता च विद्या च वित्तं च वपुर्वयश्च । वरे गुणाः सप्त विलोकनीयास्ततः परं भाग्यवशा हि कन्या ॥"

कुलीनोऽयं वरो नूनं नृपो विद्याधरोऽथवा । सदाकार-लसज्ज्वल--गनिभ्यो ज्ञायते स्फुटम् ॥ १७ ॥

केनाऽपि हेतुनाऽऽत्मीयं कुल--नामादिकं स्फुटम् । प्रकटीकुरुते सम्यग् वरो नायं मनागपि ॥ १८ ॥

पत्न्या पृष्टोऽथ गीर्वाणो विक्रमार्को जगौ तथा । ततः पत्न्यपि भूपाल इव दत्ते बलिं सदा ॥ १९ ॥

मात्राऽन्येद्युः सुता पृष्टा जामाता किञ्च जेमति । पुत्री प्राह सुरो नैवं जेमत्यन्नं नरैः कृतम् ॥ २० ॥

हृष्टा माता जगौ पुत्रि ! धन्या त्वमसि साम्प्रतम् । धर्मादेवंविधो लब्धो वरो दिव्यः सुते ! त्वया ॥ २१ ॥ यतः—

" धनदो धनमिच्छूनां कामदः काममिच्छताम् । धर्म एवापवर्गस्य पारम्पर्येण साधकः ॥" २२ ॥

षण्मासान्ते प्रियां मत्वा सगर्भां विक्रमार्यमा । जगौ रक्षोऽग्निवेतालं प्रति पत्न्या प्रमीणितः ॥ २३ ॥

अदो पाणिग्रहश्चक्रे क्रमात्तस्याः प्रपञ्चतः । सगर्भा समभूत्पुण्य--प्रभावाद् गृहिणी मम ॥ २४ ॥ यतः—

" स्थाने निवासः सकलं कलत्रं,पुत्रः पवित्रः सुजनानुरागः । न्यायाच्च वित्तं स्वहितं च चित्तं,निश्छद्म धर्मस्य सुखानि सप्त ॥

विनाऽऽवा नगरी सर्वा दु:स्था सम्भाव्यतेऽधुना । गम्यते स्वपुरे शीघ्र-मावाभ्यां स्व'पुरोपमे ॥ २६ ॥
सगर्वा गर्भिणी पत्नी ममात्यन्त सुकोमला । गर्वोच्छित्त्यै पुरेऽत्रैव मुच्यते राजनन्दिनी ॥२७ ॥ यतः—
" जाइ-कुल-रूव-बल-सुय-तव-लाभ-सिरीइ अट्ठमयमत्तो । एआइं चिय बधइ असुहाइ बहु च ससारे ॥" २८ ॥
एवमस्त्वग्निवेताले-नोक्ते विक्रमभानुमान् । लिलेखेत्यक्षरान् वाम-सद्मनो भारपट्टके ॥"२९॥
" अवन्तीनगरे गोप, परिणीय नृपाङ्गजाम् । गा पातुं दण्डभृत् पश्चो-त्करक्रीडापरोऽनघः ॥ ३० ॥
दृष्टे च पुत्रो द्वे(द्वि)ष्टां कुर्वतीं काष्ठभक्षणम् । अहमेकोऽधुना वीरः परिणीय स्यादगाम् ॥" ३१ ॥ ( युग्मम् )
ततोऽदृश्यशरीराग्नि-वेतालास्कस्थितोऽनिशम् । कुर्वन् गतागत व्योम्नि चिक्रीड विक्रमार्यमा ॥ ३२ ॥
तादृक्शक्तिं पतिं दिव्य-रूप दृष्ट्वा सुकोमला । दध्यावेवमह धन्या यस्याः स्यादीदृशः पति ३३॥
पश्यन्त्यां नृपनन्दिन्या कुर्वन् क्रीडा नभोऽङ्गणे । अदृश्यरूपवेताल-स्कन्धस्थो विक्रमार्यमा ॥ ३४ ॥
श्रीयुगादिजिन नत्वा सिद्धकार्यः प्रमोदितः । प्रतिष्ठानपुरात्सद्यः प्रतस्थे स्वां पुरीं प्रति ॥ ३५ ॥ ( युग्मम् )
स्थाने स्थाने गिरौ ग्रामे पुरे ह्रद्रे वने पुनः । कौतुकानि नृपः पश्यन् गतोऽवन्त्यां कृतत्वरः ॥ ३६ ॥ यतः—
"प्राप्तशिल्पार्थविद्यानां देशान्तरनिवासिनाम् । भवेदत्युत्सुक चेतो गन्तुं स्वीयनिकेतने ॥ ३७ ॥"
अग्निवेतालसान्निध्यात् विक्रमादित्यभूपतिः । अङ्गीचक्रे निज राज्य स्वर्गस्येव सुरेश्वरः ॥ ३८ ॥

१. ज्ञाति कुल-रूप-बल-श्रुत-तपो लाभ श्रियाऽष्टमदमत्त । एतान्येव बध्नात्यशुभानि बहु च ससारे ॥

विक्रमार्क समायान्तं भट्टमात्रोऽवगत्य च । मिलितोऽपि जगौ हृष्टो भूपाग्रे रचिताञ्जलिः ॥ ३९ ॥
स्वामिंस्तव प्रसादेना–त्रागतोऽहं पुरे ततः । अपालयं लसन्न्यायात् निखिला जनताः सदा ॥ ४० ॥
परमेकोऽनिशं चौरो मुष्णन् सर्वं पुरं छलात् । ययौ क्वचिन्महेभ्यानां लात्वा कन्याचतुष्टयम् ॥ ४१ ॥
पश्यता सततं तस्य पदस्थानादिकं मया । न ज्ञातं तेन मे तावत् दुःखं चेतसि वर्त्तते ॥ ४२ ॥ यतः—
" अर्थातुराणां न सुहृन्न बन्धुः० । "
आकर्ण्यैतन्नृपः प्राह भो अमात्य ! क्षणादपि । वधं तस्य करिष्यामि चौरस्यैव प्रपञ्चतः ॥ ४३ ॥ यतः—
" उपायेन हि तत्कुर्यात्–यन्न शक्यं पराक्रमैः । काक्या कनकसूत्रेण कृष्णसर्पो निपातितः ॥" ४४ ॥
" कस्मिंश्चिद्विपिने काक्य–सूताण्डानि बहूनि च । तद्वृक्षविवरात् सर्पो निस्ससार निरन्तरम् ॥ ४५ ॥
अन्येद्युर्निष्कृपस्वान्तः काक्यपत्यानि भूरिशः । भक्षयित्वा ययौ सद्यो बिलमध्ये सरीसृपः ॥ ४६ ॥
काकी सर्वाण्यपत्यानि भक्षितानि ततोऽहिना । निरीक्ष्य कुरुते हन्तु–मुपायान् भूरि शश्वतम् ॥ ४७ ॥
लब्धोपायाऽन्यदा काकी कस्यचिद्धनिनो गृहात् । लक्ष्यमूल्यं महाहार–मानीय न्यमुञ्चद् बिले ॥ ४८॥
विलोकयन् धनी हारं दृष्ट्वा बिलमुखे तदा । यावल्लातुं शयं दत्ते तावत्सोऽगादधो भुवि ॥ ४९ ॥
ततः कुद्दालमानीय खनित्वा तद्बिलं तदा । हत्वा भुजङ्गमं हारं जग्राह धनिको मुदा ॥ ५० ॥
उपायेन तदा काकी मारयित्वा सरीसृपम् । आजन्म सुखिनी जाता स्वापत्यजीवनाद् भृशम् ॥" ५१ ॥

एव मन्त्रीश्वरान् स्ववशी–कृत्य सुप्तो नृपोऽन्यदा । भृत्यगाढस्वरोल्लापा–ज्जागरित्वेति जल्पति ॥ ५२ ॥
भो ! भो ! भृत्या ! अह स्वप्न लभमानो मनोहरम् । कथमुत्थापितो रात्रौ भवद्भिरविचारकैः ॥ ५३ ॥
तेनाहं च हरिष्यामि युष्माकमिह जीवितम् । राजा रुष्टो नृणा किं किं न दत्ते दु खमञ्जिनाम् ॥ ५४ ।
राजायत्ता मही सर्वा कर्मायत्ताश्च जन्तव' । भर्त्रायत्ता प्रिया धान्य जलायत्त च कथ्यते ॥ ५५ ॥
तावत्तत्रागता भट्ट–मात्रादिमन्त्रिणोऽखिला' । प्रोचुरेव किमारब्ध स्वामिन् ! सेवकमारणम् ॥ ५६ ॥
भूपः प्राह निशि स्वप्नं लभमानोऽत्र मञ्जुलम् । एभिर्जागरितास्तेन कोपोऽजनि ममाधुना ॥ ५७ ॥
प्रोक्तो मन्त्रीश्वरैस्तत्र भूमिपालो जगावद । पूर्वाशाकानने कूपोऽगाधोऽस्ति जलपूरितः ॥ ५८ ॥
मध्येकूपं महानेको दृष्टः स्वप्ने सरीसृप । दिव्यरूपा युते तस्य समस्त्येका च कन्यका ॥ ५९ ॥
भ्रमन्नहं गतो यावत् तत्र स्वप्नान्तरे निशि । तावत्सर्पो जगौ कन्या लाहि त्व मन्मुखादिमाम् ॥ ६० ॥
यदि त्व कातरस्तर्हि याहि दूरमतो द्रुतम् । ' श्रुत्वैतत् यावता कन्या गृहीतुमुद्यतोऽभवम् ॥ ६१ ॥
तावदेभिरह दुष्टै–रस्मि जागरितः क्षणात् । मन्त्री जगावय स्वप्नः सत्यः सम्भाव्यते स्फुटम् ॥ ६२ ॥ यतः—
" श्वेताम्बरधरा नारी श्वेतगन्धाऽवलेपना । अवगूहेत य स्वप्ने तस्य श्री. सर्वतोमुखी ॥ ६३ ॥
देवता गुरवो गाव. पितरो लिङ्गिनो नराः । यद्वदन्ति नर स्वप्ने तत्तथैव भविष्यति ॥"६४ ॥
कोऽपि विद्याधरो देवः किंनरो व्यन्तरोऽथवा । प्रसन्नीभूय भवते स्फुटं किमपि दास्यति ॥ ६५ ॥

तेन तत्रेत्य तां कन्यां रथादङ्गीकुरु प्रभो । यत एवंविधः स्वप्नो दुर्लभो देहिनामिह ॥ ६६ ॥
ततो मन्त्रियुतो भूपो यावत् तत्र ययौ क्षणात् । तावत्सर्पो जगौ यस्य साहसं विद्यतेऽनघम् ॥ ६७ ॥
स मदीयाननात्कन्यां गृह्णातु साम्प्रतं द्रुतम् । नो चेद् दूरमतः कूपाद् यातु कातरमानसः ॥ ६८ ॥ ( युग्मम् )
श्रुत्वैतन्निर्भयो भूपो मध्येकूपं समेत्य च । जग्राह कन्यकां सर्प-मुखाद् यावद् मनोहराम् ॥ ६९ ॥
तावत्सर्पो नरीभूय दिव्यदेहो जगावदः । वैताढ्यपर्वतशृङ्गे विद्यते श्रीपुरं पुरम् ॥ ७० ॥
तत्राहमवसं विद्या-धरो धीराभिधानतः । इयं ममाभवत्पुत्री दिव्यरूपा कलावती ॥ ७१ ॥
वर्द्धमाना क्रमाद् भूरिविद्यानामभवद् गृहम् । विलोकितोऽपि नो दृष्टो वरोऽस्याः सदृशः क्वचित् ॥ ७२ ॥
त्वां सात्त्विकाग्रणीं मत्वा भूपात्राहं समागमम् । तुभ्यं दातुं सुतां तेन मयैव त्वं परीक्षितः ॥ ७३ ॥
तेनेमां पुत्रिकां सद्यो गृहाण त्वं नरोत्तम ! । ततः श्रीविक्रमादित्यः परिणिन्ये च कन्यकाम् ॥ ७४ ॥
ततो भूमीपतिः कन्यां लात्वा स्वावासमीयिवान् । आपृच्छ्य च ययौ विद्या-धरः स्थानं निजं द्रुतम् ॥ ७५ ॥
इतोऽन्येद्युर्निशीथिन्यां हृतां केन कलावतीम् । मत्वा श्यामाननो भूपः प्रगे चिन्ताऽऽतुरोऽजनि ॥ ७६ ॥
पृष्टोऽमात्यादिभिर्दुःख-हेतुं भूपो जगाविति । केनाप्यद्य प्रिया रात्रौ हृता मम कलावती ॥ ७७ ॥
ततोऽमात्या जगुर्येन मुषिता नगरी निजा । तेनैव गृहिणी पुंसा हृता सम्भाव्यते तव ॥ ७८ ॥
विचार्य मन्त्रिभिः सार्द्धं प्रियां वालयितुं नृपः । चकारोपक्रमं भूरि लब्धा सा नाधुना क्वचित् ॥ ७९ ॥

ततो भूपतिरेकाकी खड्गपाणिर्निशामुखे । प्रिया वालयितुं स्तेन ज्ञातुं च निर्ययौ रहः ॥ ८० ॥ यतः—

" षट्कर्णो भिद्यते मन्त्र–श्चतुः कर्णस्तु धार्यते । द्विकर्णस्य तु मन्त्रस्य ब्रह्माऽप्यन्तं न गच्छति ॥" ८१ ॥

प्रजाः पालयितुं शश्वत् निग्रहीतुं च तस्करम् । स्थाने स्थाने नृपो रात्रा–वेकाकी निर्भयोऽभ्रमत् ॥ ८२ ॥ यत —

" दुष्टस्य दण्डः स्वजनस्य पूजा न्यायेन कोशस्य सदैव वृद्धिः । अपक्षपातो रिपुराष्ट्ररक्षा पञ्चैव यज्ञाः कथिता नृपाणाम् ॥" इत्यादि

ततो देवकुले गत्वा भूपालेनानवैः स्तवैः । स्तुता चक्रेश्वरी देवी प्रादुर्भूय जगावदः ॥ ८४ ॥

भो भूपाय प्रसन्नाहं प्रभूत भक्तिनस्तव । मार्गयेष्ट यतो देव दर्शनं सफलं भवेत् ॥ ८५ ॥ यतः—

" अमोघा वासरे विद्युत्० ।

तुष्यन्ति भोजनैर्विप्रा मयूरा घनगर्जितैः । साधवः परसम्पत्त्या देवता भक्तितः पुनः ॥ ८६ ॥

भूप. मोवाच भो देवि ! हृता येन मम प्रिया । तस्य पुंसः स्वरूपं मे स्थितिं च कथयाधुना ॥ ८७ ॥

देवी प्राह पुरेऽत्राभूत् पुरा श्रेष्ठी धनेश्वरः । पत्नी प्रेमवती तस्याऽभवत्प्रीतिमती प्रिया ॥ ८८ ॥

गुणसाराभिधः पुत्रोऽभवत्तारगुणालयः । तस्य रूपवती रूपजितदेवाङ्गना प्रिया ॥ ८९ ॥ यत'—

" सा सा सम्पद्यते बुद्धिः सा मतिः सा च भावना । सहायास्तादृशा ज्ञेया यादृशी भवितव्यता ॥ ९० ॥

स्थाने निवासः सकलं कलत्रं० ॥" ९१ ॥

गुणसारोऽन्यदा प्राह द्रव्यार्जनकृते स्फुटम् । लात्वा क्रयाणकं दूर–देशे यास्याम्यहं पितः ! ॥ ९२ ॥

श्रेष्ठी माह सुतं पुत्र ! देशान्तरगमेच्छया । मद्गृहेऽस्ति धनं भूरि तेन पूरय वाञ्छितम् ॥ ९३ ॥
देशान्तरोऽतिविषमो गन्तुं शक्योऽतिकर्कशैः । सुकुमारः कुमार ! त्वं मा कृथास्तद् वृथाऽऽग्रहम् ॥ ९४ ॥
यस्येन्द्रियाणि विद्यन्ते वश्यानि साहसं पुनः । वक्तुं यो वा विजानाति विदेशं यातु सोऽङ्गवान् ॥ ९५ ॥
अमुं कदाग्रहं मुञ्च स्वगृहं समलंकुरु । यतोऽस्माकं भवानेकः पुत्रो नेत्रप्रमोदकृत् ॥ ९६ ॥
एवमुक्तोऽप्यसौ युक्त्या न यदाऽत्यजदाग्रहम् । ततस्तातेन चलनं पुत्रस्य मानितं श्रियै ॥ ९७ ॥
ततो द्रविणमादाय भूरिक्रयाणकानि च । गुणसारोऽचलत्तातं मुत्कलाप्य शुभेऽहनि ॥ ९८ ॥
इतो धनेश्वरागारवृक्षस्थो व्यन्तरोऽधमः । वीक्ष्य रूपवतीरूपं मोहितोऽजनि तत्क्षणात् ॥ ९९ ॥ यतः—

"किमु कुवलयनेत्राः सन्ति नो नाकनार्यः, त्रिदशपतिरहल्यां तापसीं यत्सिषेवे ।
हृदयतृणकुटीरे दीप्यमाने स्मराग्ना–वुचितमनुचितं वा वेत्ति कः पण्डितोऽपि ॥१००॥

देवा विसयपसत्ता० ॥"१०१॥

गुणसारसदृग्रूपो व्यन्तरो भूरिद्रव्ययुक् । श्रेष्ठिपार्श्वे समागत्य तातेत्युक्त्वाऽकरोन्नतिम् ॥१०२॥
१२ श्रेष्ठी प्राहाऽधुना कस्य पार्श्वे सर्वं क्रयाणकम् । मुक्त्वा किमर्थमागास्त्वं पश्चाज्जल्पेति नन्दन ! ॥१०३॥
गुणसारो जगावेको ज्ञानी मार्गेऽमिलन्मम । तेनोक्तं मरणं भावि विदेशं गच्छतस्तव ॥१०४॥
आकर्ण्यैतदहं सर्वं क्रयाणकसमुच्चयम् । विक्रीय द्रविणं सर्वमनैषमिह साम्प्रतम् ॥१०५॥

पिता प्राह वर पुत्र ! पश्चाद् यस्त्व समागम । यत एकः सुतरत्न मे कुलाधारो गुणाकर ॥१०६॥
गुणसारश्छली गेह-कृत्य कुर्वन् सदाऽखिलम् । मानस रञ्जयामास जनकस्य भृश क्रमात् ॥१०७॥
रूपवत्या सम नित्य भोगाननुभवन् सुखम् । प्रचुर समग्र नस्थौ गुणसारश्छली तदा ॥ १०८ ॥ यतः—
"प्राकृत एव प्राप्ते द्रव्ये देदीप्यते न सत्पुरुष । वारिणि तैल विकसति निर्मुक्त स्त्यायते सर्पिः ॥ १०९ ॥
धूमः पयोधरपद कथमप्यवाप्य वर्षाम्बुभि' शमयति ज्वलनस्य तेजः ।
दैवादवाप्य ननु नीचजनः प्रतिष्ठा प्रायः स्वबन्धुजनमेव तिरस्करोति ॥११०॥
इतः स्वल्पार्जितश्रीको गुणसारसुतोऽछली । विदेशादेत्य तातान्ते तातेत्युक्त्वाऽकरोत्प्रतिम् ॥१११॥
दृष्ट्वा त जनको दध्यौ किमय स्यात्सुतो मम । एक' पूर्व ममोपान्ते विद्यते तनयोऽनघः ॥१२२॥
श्रेष्ठी प्राह भवान् कस्य प्राघूर्णोऽत्र समागमत् । स प्राहाह भवत्सूनु—रागम दूरदेशतः ॥११३॥
इतश्छली सुत. प्राह रे ! रे ! पापिष्ठबालिश ! । मा त्वं छलयितु ह्यत्र नगरे किमगा द्रुतम् ॥११४॥
एव चेद्वक्षि भूयस्त्व तदाऽनर्थो भविष्यति । न ज्ञात किं पल मास-फीने वा न श्रुतं त्वया ॥११५॥
एव द्वावपि सदृशा-कारौ सदृक्प्रजल्पकौ । सदृक्सङ्केतकथकौ सदृग्गमनकारकौ ॥११६॥
ततः श्रेष्ठ्यादयो शेषा लोका एव जगुस्तदा । विवादोऽत्र न केनापि पुसा स्फेटयितु क्षमः ॥११७॥
ततो भूमिपतेः पार्श्वं भवन्तौ द्वावपि द्रुतम् । व्रजता तत्र मन्त्रीशा भट्टस्यन्ते भवतो' कल्मिम ॥११८॥

ततो गत्वा नृपोपान्ते मिथस्ताविति जल्पतः । अयं धनेश्वरस्तातो ममेदं सदनं पुनः ॥११९॥
इयं कलावती भार्या मदीया गुणशालिनी । रूप्यस्वर्णमणीपट्ट-कूलादिविभवः पुनः ॥१२०
गृह्णात्ययं छलं कृत्वा सर्वमेतन्न संशयम् । श्रुत्वैतद् भूपतिस्तत्र संशये पतितस्तदा ॥१२१॥
परीक्षार्थं नृपः प्राह-कार्ये मन्त्रीश्वरान् प्रति । एतयोर्गृहसम्बन्धी विवादः पतितोऽधुना ॥१२२॥
भवन्तोऽद्यानयोर्वादं भजन्तु बुद्धितो द्रुतम् । भवादृशेष्वमात्येषु विवादो भाति नो मनाग् ॥१२३॥
प्राज्ञे नियोजितेऽमात्ये महीशस्य गुणत्रयम् । यशः स्वर्गे निवासश्च पुष्कलश्च धनागमः ॥ १२४ ॥
कुलशीलगुणोपेतं सत्यधर्म्मपरायणम् । रूपिणं बुद्धिमन्तं च राजाऽध्यक्षं च कारयेत् ॥१२५॥
पप्रच्छुर्धीसखा यद् यत् तत् तत्तौ जल्पतः समम् । एवं पुनः पुनः पृष्ट्वा विलक्षा अभवंश्च ते ॥१२६॥ यतः—
“ बहुबुद्धिसमायुक्ता सविज्ञानबलोत्कटाः । शक्ता वञ्चयितुं धूर्त्ता ब्राह्मणादिव छागकम् ॥१२७॥
अत्र ब्राह्मणात् बुद्ध्या छागमोचनकथा । तथाहि—
“ यजमानाद् द्विजश्छागं याचित्वांऽसे विधाय च । आयान् मार्गेऽन्यदा धूर्तैरेवं मोक्तः पृथक् पृथक् ॥ १२८ ॥
आद्योऽवग् श्वा द्वितीयोऽवक् शशकोऽवक् तृतीकाः । राक्षसोंऽसे कृतोऽनेन स्वं हन्तुं मूढचेतसा ॥१२९॥
श्रुत्वेतद्वाडवः स्कन्धा-दुत्तार्य छागमञ्जसा । तथाऽमुञ्चद्यथा नंष्ट्वाऽगमच्छागो जिजीव च १३०॥
इत एकागता तत्र पण्यस्त्रीति जगौ स्फुटम् । ‘त्यक्त्वाऽमात्यान् नरः स्त्री वाऽनयोर्भञ्ज्यात् कलिं यदि ॥१३१।

तदा तस्य नृपो मानं रमादानात् करिष्यति । न विना शेमुषीं शुद्धां कार्यं सिद्धयति कर्हिचित् ॥१३२॥
राजा प्राह न धी' कस्या-ऽपीनैवास्ति महीतले । यत. स्यान्छेमुषी हीन-मध्यो-त्तमनृणामिह ॥१३३॥
लहुडा वडा ए किसिउ गुणवड्डा ससारि । गागरि अच्छइ बइठडी करवइ [3]पिजइ वारि ॥१३४॥
तेनानयोर्नरो नारी प्रभिन्द्याद् वादमञ्जसा । ततो वेश्या जगौ लोका ! मत्कृत पश्यताखिलाः ॥१३५॥
कारयित्वा गृहं छिद्र-रिक्तमेक पुराङ्गना । तत्रेत्यावक् तदा तावा कार्यं श्रेष्ठिपद्गजौ प्रति ॥ १३६ ॥
दत्ते द्वारे द्वयोर्मध्ये यः कश्चित् सदनाद्व्रयात् । नि.सृत्य मा स्पृशेत् श्रेष्ठिगेहश. स भविष्यति ॥१३७।
एव कृत्वा च तौ तस्मिन् प्रविष्टौ यावता गृहे । तावता वेश्यया दत्त दृढ द्वार क्षणात्तदा ॥१३८॥
उक्त च भवतोर्मध्ये य. कश्चित् श्रेष्ठिन सुतः । नि'सृत्य सद्मनो मध्यात् मत्करौ स्पृशतात् स व ॥१३९ ॥
स एव मनुजः श्रेष्ठि-गृहस्वामी भविष्यति । सरिष्यति च यो नैव तस्य दण्डः करिष्यते ॥ १४० ॥
एवमुक्ते च नि सृत्य व्यन्तरो गृहमध्यतः । चकार गणिकापाणिस्पर्शं हृष्टमनास्तदा ॥ १४१ ॥
वेश्याऽवग् गुणसारोऽसि सत्यस्त्व सात्त्विकाग्रणीः । तवैव जनको लक्ष्मी-गेंह रूपवती प्रिया ॥ १४२ ॥
श्रुत्वैतत् व्यन्तरो हृष्टो-ऽतीव पण्याङ्गनावचः । वेश्यया विहित चिह्न तस्य देहे तदा स्फुटम् ॥ १४३ ॥
द्वितीयश्च न शक्नोति नि सर्तुं च गृहाद्यदा । तदा वेश्या जगावेष गुणसारश्छली स्फुटम् ॥ १४४ ॥

---

१ गुणवड्डु ख । २. इच्छइ क । ३ किजइ, क ।

एवमुक्त्वा तदादौ यो निःससार नरो गृहात् । तं निर्घाट्य द्रुतं गेहमध्यस्थस्यार्पितं गृहम् ॥ १४५ ॥
व्यन्तरोत्पादितो गर्भो रूपवत्या इतः स्त्रियाः । अकस्माद् भयभीतायाः पपात वसुधातले ॥ १४६ ॥
दध्यौ रूपवती गर्भ- दुष्टाहोऽत्र भविष्यति । वहिःष्टात् क्षिप्यते तेन यावज्जानाति कोऽपि न ॥ १४७ ॥
ध्यात्वेति खर्प्परे क्षिप्त्वा तं गर्भं तत्क्षणात्तदा । मुमोच वहिरुद्याने रहो रूपवती तदा ॥ १४८ ॥
विमानं स्खलितं स्वीयं यान्नीतश्चण्डिकाऽम्बरे । वीक्ष्य दध्यौ ममेदानीं यानं केन धृतं दृढम् ॥ १४९ ॥
इतस्ततो विलोक्याधो यावत्पश्यति भूतलम् । खर्प्परस्थगितं बालं तावद्ददर्श चण्डिका ॥ १५० ॥
शिशोरस्य प्रभावेण विमानं स्खलितं मम । तेनायं बलवान् भावी ध्यात्वेति तमदात्करे ॥ १५१ ॥
खर्प्परेत्यभिधां तस्य वितीर्य चण्डिका तदा । स्वगुहायां तमानीय वर्द्धयामास पुत्रवत् ॥ १५२ ॥
खर्प्परस्याष्टमे वर्षे जाते चण्डिकया तदा । एतावन्तो वरा दत्ता दुर्ग्राह्या महतामपि ॥ १५३ ॥
अस्यामेव गुहायां ते नूनं मृत्युर्भविष्यति । गुहावहिर्न कोऽपि त्वां हन्तुं देवोऽपि शक्ष्यति ॥ १५४ ॥
असिनाऽनेन दुर्जेयः सर्वेषां त्वं भविष्यसि। मत्स्मृतेर्वहिरेव त्व-मदृश्यविग्रहोऽपि च ॥ १५५ ॥
गुहागतस्य ते देह-रूपं दृश्यं भविष्यति । एतान् प्राप्य वरान् सोऽपि बभ्राम निर्भयोऽभितः ॥ १५६ ॥
चौर्य-स्त्रीहरणादीनि कुर्वन् स शङ्कते नहि । अखण्डितव्रता पत्नी गुहामध्येऽस्ति तेऽधुना ॥ १५७ ॥
देवीप्रसादमासाद्य सुरङ्गादीनि भूरिशः । तेन कृतानि चौरेण कृत्यानि हेलया भुवि ॥ १५८ ॥

रूपं नवं नवं कृत्वा सेवकीभूय ते सदा । कारं कारं पुरं स्तैन्यं स्तेनो याति निजं पदम् ॥ १५९ ॥
तेन तस्य वधः कष्टात् भवता हि करिष्यते । दुर्ग्राह्योऽस्ति सदा देव-दानवानामपि स्फुटम् ॥ १६० ॥
यदि मिलितस्तस्यैव क्षमामेव करिष्यसि । तदा त्वं मृत्यवे तस्य गृहागस्य भविष्यसि ॥ १६१ ॥
तेन त्वया बहिर्भूय कर्त्तव्या सततं क्षमा । यदि त्वां ज्ञास्यति स्तेनो दुःखं नव तदा ध्रुवम् ॥ १६२ ॥
" क्षमा खड्गं करे यस्य दुर्जनः किं करिष्यति । अतृणे पतितो वह्निः स्वयमेवोपशाम्यति ॥ १६३ ॥
आपदां कथितः पन्था इन्द्रियाणामसंयमः । तज्जयः सम्पदां मार्गो येनेष्टं तेन गम्यते ॥ १६४ ॥
यस्य हस्तौ च पादौ च जिह्वा च सुनियन्त्रिता । इन्द्रियाणि सुगुप्तानि रुष्टो दुष्टः करोति किम् ? ॥ १६५ ॥
श्रुत्वैतद्विक्रमादित्यो नत्वा देवीपदाम्बुजम् । रात्रावेव निजावास-मलङ्कृत्य प्रसुप्तवान् ॥ १६६ ॥ यतः—
सिद्धिं याते निजे कार्ये देवदानवभूमिपाः । मानवा अपि हृष्यन्ति दृष्टे चन्द्रे यथाऽम्बुधिः ॥ १६७ ॥
प्रातरुत्थाय शयना-दाकार्य सचिवान् जगौ । सिद्धं नो वाञ्छितं सर्वं ज्ञाता च क्षिपतः स्थितिः ॥ १६८ ॥
ततश्च निर्भयो राजा एकाक्यसिसखो निशि । जीर्णवस्त्रो भ्रमन् बाह्यो-द्यानदेवकुले ययौ ॥ १६९ ॥
नत्वा चक्रेश्वरीं देवीं स्तुत्वोदारैः स्तवैः पुनः । जपन् पञ्चनमस्कार-मुपविष्टोऽग्रतो नृपः ॥ १७० ॥
इतोऽत्र रु खर्परस्तेनः कन्यानामग्रतः स्फुटम् । अवन्तीशं छलात् हत्वा राज्यं लप्स्ये यदा ह्यहम् ॥ १७१ ॥
अवन्तीनां महेभ्यानां पुत्रीणां स्फुरदुत्सवम् । पाणिग्रहं करिष्यामी-त्येवमङ्गीकृतं मया ॥ १७२ ॥ ( युग्मम् )

ततश्च खर्प्परश्चौरः पुरं हन्तुं व्रजन् पथि । साधुमेकं स्थितं प्रेक्ष्य नत्वाऽप्राक्षीदिदं तदा ॥ १७३ ॥
भो साधो ! विक्रमो मेऽद्य मिलिष्यत्यथवा नहि । साधुः प्रोवाच तं स्तेनं मिलिष्यत्येव विक्रमः ॥ १७४ ॥
गत्वा चक्रेश्वरीगेहं दृष्ट्वा चैकं नरं स्थितम् । स्तेनोऽवक् कुत आगास्त्वं किंनामा किंकृते वद ॥ १७५ ॥
आकार–जल्पना–काल–गमनादिकहेतुतः । ज्ञात्वा चौरं महीपालो दध्यावेवं तदा हृदि ॥ १७६ ॥
आकारः[1] कुलमाख्याति देशमाख्याति भाषितम् । सम्भ्रमः स्नेहमाख्याति वपुराख्याति भोजनम् ॥ १७७ ॥
ध्यात्वेति तस्करं ज्ञात्वा जल्पनाकारतो नृपः । मलिम्लुचं छली सम्यग् ज्ञातुं प्राहेति तं प्रति ॥ १७८ ॥
तिलङ्गविषयाद् दुःस्थो देशे वैदेशिको भ्रमन् । क्षुधितोऽत्राधुना श्रान्तिच्छिदेऽस्थामहकं निशि ॥ १७९ ॥
दध्याविति ततश्चौर इमं वैदेशिकं नरम् । कृत्वा सखायमद्याहं करिष्ये स्वसमीहितम् ॥ १८० ॥ यतः—
‘एको ध्यानमुभौ पाठं त्रिभिर्गीतं चतुः पथम् । पञ्च सप्त कृषिं कुर्यात् सङ्ग्रामं बहुभिर्जनैः ॥’’ १८१ ॥
चौरः प्राह मया सार्द्धं चल वैदेशिकाधुना । तुभ्यं दास्ये पुरीमध्ये गतोऽहं भोजनं द्रुतम् ॥ १८२ ॥
कान्दोः प्राणप्रिया पूर्वं भगिनीति कृता मया । तत्रावयोः सुखेनैवा– दनं शीघ्रं भविष्यति ॥ १८३ ॥
ततस्तेन युतः स्तेनो गत्वा कान्दविकालये । भोजनं दापयामास तस्मै वैदेशिकाय च ॥ १८४ ॥
ततः कल्पगृहात्स्तेनो लात्वा मद्यघटद्वयम् । दण्डिकोभयतो बद्ध्वा न्यस्याचलत् तदंसयोः[2] ॥ १८५ ॥

---

१. आचारः क. । २. तद्दंशयोः क. ख. ।

नाग ाग्निन्घयाणाग मन्य भूमीभुजोऽग्निक' । ममागात म्मृतः सद्य' मान्निध्य कुरुते रहः ॥ १८६ ॥
नग्निकोऽराद् नगे वाल्मा ममगाने-ग्नि मे नृप ' । विक्रमार्की जगौ ताव-कीनेच्छा पूरयिष्यते ॥ १८७ ॥
विक्रमार्कंयन्नागेर्गे दृग्गोरग्रे नगानिदम । मरकुम्भं पिबाम्येक-मिनीच्छा रिगते मम ॥ १८८ ॥
भाकर्ण्यैतमगो स्नेनो र ' रे । निर्विलपतक ! । मारम्मात्रेण मनेनो-दरं नापूरि किं मत्र ॥ १८९ ॥
भूयो भूयो वदत्येवं मीने विक्रमभानुमान् । पातुमेक घटं यान-ल्ली हस्ते परोऽपतत् ॥ १९० ॥
मन्ना मग्न घट तेन-न्न हनु यानताऽचलत् । तावदर्य घट क्षिप्त्वा विक्रमार्कः पलायितः ॥ १९१ ॥
स्तेनं पृष्ठी समागा-न दृष्ट्वा कृष्णाहिमाम्यये । यावद् भूपो ययौ तावद् गौः प्रमूताऽभवत्सरुट् ॥ १९२ ॥
गोपायमपनो भूपो-ऽयटिप-रल्गारप । मावदूर्ध समागात. कृष्णवर्णः सरीसृप. । १०३ ॥
गाद्दशां गुर्भी दृष्ट्वा स्तेनो विस्यद् गृहाद् बहि. । हन्तु विक्रमभूपाल तस्यौ पश्यन्निनस्ततः ॥ १९४ ॥
मनुकोऽप द्विनो गेनु-शब्दादन्य परिर्पूदात् । मृगम्य ग्रामपार्श्वस्थं भीम दृष्ट्वाऽम्बर जगौ ॥ १०५ ॥
त्रिशोऽसि भो पनि ' प्रदीप कुरु पवन । पतिनोऽस्ति दोप-नगे मृत्युममेऽधुना ॥ १९६ ॥
नन्मादर्प द्रु होम- मन्त्रनपादिका क्रियाम् । करिष्येऽहं तनो भूप' कुशली जायते चिरम ॥ १९७ ॥
पञ्चतारा ग्रहा यत्र मोमे कुर्वन्ति दक्षिणे । भौमे च राजमारी स्यात् जनमारी च भार्गवे ॥ १९८ ॥

---

१ पुरा मण्डपन्तमभपन्पत । यावत्स्थिताऽगमत् तावत्० ग. ।

बुधे रसक्षयं कुर्यात् गुरौ कुर्यात् तिरोदकम् । शनौ वर्षक्षयं कुर्यात् मासे मासे निरीक्षयेत् ॥ १९९ ॥
रोहिण्या यदि शकटेन चन्द्रो गच्छति पाटयन् । तदाऽतिदुःस्थं विजानीयाद् क्रूरयुक्तो विशेषतः ॥" २०० ॥
प्रिया प्राह पते चैत्र--पुटीपाटीं महीपतिः । किं दास्यतीति जल्पन्ती यत्तद् प्रत्युत्तरं ददौ ॥ २०१ ॥ यतः—
[1]एकइं बोलिइं बोलती बालइ सओ भरनार । कइ अकारण राखसी कइ पिसाचि न नारि ॥" २०२ ॥
ततः स्वयं द्विजो दीपं कृत्वा होमादि चक्रवान् । यावद् बबन्ध गां तावद् ननाश तस्करः क्वचित् ॥ २०३ ॥
स्वस्थाने च द्विजः सुप्तः पश्चात्सर्पोऽपि जग्मिवान् । ततो निःसृत्य भूपालः प्रययौ राजवर्त्मनि ॥२०४॥
दध्यौ भूमीपतिर्मौनं विना नैव कदाचन । निग्रहं शक्यते कर्त्तुं चौरस्य बलिनोऽस्य हि ॥२०५॥
अतः परं मया तस्य मलिम्लुचस्य सन्ततम् । कर्त्तव्यो विनयो येन हस्ते चटति तस्करः ॥२०६॥
किमसत्यं मुनेर्वाक्य–मिति ध्यायति तस्करे । मिलितो विक्रमो दस्यो–स्तेन चोक्तो जगाविदम् ॥२०७॥
[2]भो माम भवतः कान्द–विकया याम्याः सुतोऽस्म्यहम् । मात्रा च कर्पितो रोषात् विक्रमाह्वोऽभ्रमं पुरे ॥२०८॥
चौरः प्रोवाच जामेय ! गच्छ सार्द्धं मयाऽधुना । ततस्त्वां सुखिनं स्वन्नपानदानात् करोम्यहम् ॥२०९॥
यावच्च कुर्वते पुत्रपुत्र्योऽपि कथितं लघु । तावत्कुर्वन्ति सन्मानं जननीजनकादयः ॥२१८॥ यतः—

---

१. एकइं बोलिइं बोल सउ बालइ सिउं भरतार । कइआ गरणह राम्वसीं कइ राखसी न नारी. ख. ।
२. भूपः प्राह भवत्कान्दविक्रया याम्याः सुतोऽस्म्यहं । मात्रा च कर्पितो रोषाद् विक्रमार्कोऽभ्रमं पुरे. ग. ।

मोया निअगमइविगप्पिअंमि अत्थे अपूरमाणमि । पुत्तस्स कुणइ वसण चुलणी जह बंभदत्तस्स ॥२११॥
तावन्माता पिता तावत् तावत्स्वजनबान्धवा । यावत्परस्पर प्रीतिर्जायते देहिनामिह ॥२१२॥
मुग्धस्य दु खस्य न कोऽपि दाता ०
दध्याविति पुनर्भूप–स्तस्करोऽयं बली छलात् । देवीवरं समासाद्य मुष्णाति स्माखिल पुरम् ॥२१३ ॥
ततोऽसौ तस्करो यद्यत् प्रतिकूल करिष्यति । तत्तत्सर्वं सहिष्येऽहं साधुवत् साम्प्रत स्फुटम् ॥२१४॥ यतः—
कष्टान्यसहमानाना गुणारोप' कुतो भवेत् । वेधवन्न सहित्वैव भत्रो हेमश्रुती स्वयम् ॥२१५ ॥
भूपयुक्तो व्रजन् स्तेनो मार्गे नत्वा ऋषिं जगौ । भो यते ! यत्त्वया प्रोक्त मिलित तन्न साम्प्रतम् ॥२१६ ॥
ऋषिर्दध्यावह वच्मि भूमिपालमिम यदि । तदाऽनर्थो महान् भावी लोकानामनयोः पुनः ॥२१७॥
ऋषि प्राह मया प्रोक्त–मभिधानेन विक्रमः । मिलिष्यति पुन सैष नाम्ना च मिलितस्तव ॥ २१८ ॥
स्वस्थाने तस्करो गत्वा प्रोवाचेति नृप प्रति । यावन्निष्पद्यते भक्त तावत् त्व तिष्ठ मण्डपे ॥ २१९॥
तथाकृत्य जगौ गेह–मध्ये शय्यास्थतस्कर. । भो ! भो ! महेभ्यतनया ! शृणुताद्य वचो मम ॥२२०॥
भागिनेयस्य सान्निध्यात् हत्वा विक्रमभूपतिम् । लात्वा राज्यं भवन्तीश्च परिणेष्येऽहमञ्जसा ॥२२१॥
मम गेहे सुवर्णस्य सन्ति सप्त च कोटय. । सपादलक्षमूल्यानि रत्नानि च दशायुतम् ॥२२२॥

---

१ माता निजकमत्याविकल्पितेथऽपूर्यमाणे । पुत्रस्य करोति व्यसन चुलनी यथा ब्रह्मदत्तस्य ॥

दिव्यानां पट्टकूलानां विद्यते च शतत्रयम् । मुक्तानां मूटकद्वन्द्वं द्रव्यकोट्यश्चतुर्दश ॥२२३॥
आकर्ण्यैतज्जगौ हस्ते कृत्वाऽसिमिति भूपतिः । रे ! पापिष्ठाधुना लाहि करवालं करे दृढम् ॥२२४॥
परस्त्रीहरणस्तैन्या-दिकपापस्य तेऽधुना । शीर्षच्छेदादसिर्मेऽसौ प्रायश्चित्तं प्रदास्यति ॥२२५॥
इत्यादिहक्कितश्चौराऽसि-सखा यावदुत्थितः । तावद् युधे नृपस्तस्य सम्मुखं चलितः क्रुधा ॥२२६॥
चौरो दध्यौ पुमानेष मयैव मुग्धबुद्धिना । आनीतः सदने किं त्विदानीं हहा करिष्यति ॥२२७॥
गृहीतो दुःशको व्याघ्रो हस्ते क्रुधाऽरुणो मया । दत्ता कौतुचिका देहे मयका सुखहेतवे ॥२२८॥
राजा दध्यावयं चौरो विद्यते खर्परः खलु । प्रोक्तो देवतया पूर्वं यो मदग्रे बली भृशम् ॥२२९॥
वेलाऽस्ति साम्प्रतं हन्तुं तस्करं मे दुराशयम् । गुहाया निर्गतो देवदैत्यानां सोऽपि दुःशकः ॥२३०॥
यथा तथाऽधुना तेनोपायेन केनचित् द्रुतम् । हन्तव्योऽयं मयाऽत्रैव खर्परस्तस्कराग्रणीः ॥२३१॥
एवं परस्परं ध्यात्वा मेदिनीपतितस्करौ । रणाङ्गणे समायातौ युद्धं कर्तुं समुद्यतौ ॥२३२॥
क्षणं व्योम्नि क्षणं भूमौ गच्छन्तौ स्तेन-भूपती । ददातेऽङ्गाङ्ग्योर्बाढं प्रहारं निर्दयौ मिथः ॥२३३॥
चौरासिं स्वासिघातेन यावद् भूपो बभञ्ज श्राक् । तावत् तीक्ष्णासिमादायाययौ स्तेनो युधे गृहात् ॥२३४॥
कृतान्ततुल्यमायान्तं स्तेनमालोक्य भूभुजा । ध्यातमात्रोऽग्निवेतालः समायातो नृपान्तिके ॥२३५॥
"यस्यास्ति सुकृतं पूर्व-कृतं भूरि शरीरिणः । स्मृतमात्राः सुरास्तस्य पार्श्वमायान्ति तत्क्षणात् ॥२३६॥

यावत् स्तेनोऽसिना हन्तु भूपतिं धावितो रुषा । असिं हृत्वाऽग्निवेतालश्चौराद् भूमिभुजे ददौ॥२३७॥
इतश्च भृकुटीं कृत्वा तस्करोऽरुणलोचनः । क्रमाभ्या कम्पयामास समन्ताद् मेदिनीतलम् ॥२३८॥
भूप' प्राहासिनाऽनेन भो ! भो ! स्तेना तवाधुना । अवन्तीपुरराज्येच्छा पूरयिष्याम्यहं द्रुतम् ॥२३९॥
श्रुत्वैवत् तस्करो भीतो प्राग् गुहायामुपाविशत् । दध्यौ च हा ! मयाऽऽनीतो वधाय स्वस्य साम्प्रतम् ॥२४०॥
अथवा केनचित् पुसा देवेन दानवेन वा । उक्तो मम वधोपायः पुरतोऽस्य दुरात्मन ॥ २४१ ॥
भूप प्राहाग्निक स्तेन सशोध्याशानयाचिराद् । यतोऽस्य दीयते शिक्षा दुष्टस्य खड्गघाततः ॥२४२॥
संशोध्या चाग्निवेताल, स्तेन दर्यास्थित रहः । बहिर्धृत्वा निनायाशु भूमिपालपुर, स्फुटम् ॥ २४३ ॥
सम्यग् दृष्ट्वा च त चौरं दध्यावेव महीपति' । अनेन मे कृता सेवा नानारूपविधानतः ॥ २४४ ॥
विद्यन्तेऽत्र वणिक्पुत्राः पुरीमध्ये च भूरिशः । व्यवसायं वितन्वानाः तस्करास्यास्य राशिना ॥ २४५ ॥
विक्रम प्राह भो ! स्तेन ! कुरु युद्ध मया सह । यतो हि जल्पिताः शूरा भवन्ति द्विगुणा द्रुतम् ॥ २४६ ॥
एवमुत्साहितः स्तेनो वचनेन महीभुजा । उन्मूलिततरु शस्त्रीकृत्वा हन्तु प्रधावितः ॥ २४७ ॥
जघान तस्करो यावत् तरुणा भूपमस्तकम् । लाघवाद् भूभुजा तावच्छिन्न स्तेनशिरोऽसिना ॥ २४८ ॥
श्वसन् खर्परकस्तेन' खेदं तन्वॅस्तदा हृदि । स्वस्थीकर्तु द्रुत प्रोक्त एव विक्रमभानुना ॥ २४९ ॥
अहमस्य पुरस्यैव स्वामी विक्रमभानुमान् । खेदस्त्वया न कर्तव्यः कुर्वता समर मया ॥ २५० ॥

शूराः शूरैः समं युद्धं कुर्वन्तोऽपि रणाङ्गणे । हता खेदं न कुर्वन्ति स्थिरिरेनं महात्मनाम् ॥ २५१ ॥
स्वस्थीकृतस्ततः सद्यो विक्रमार्कमहीभुजा । मृत्वा खर्परकस्तेनः परलोकं समीयिवान् ॥ २५२ ॥ यतः—
" तावच्चन्द्रबलं ततो ग्रहबलं ताराबलं भूबलम् । तावत् सिध्यन्ति वाञ्छितार्थमखिलं तावज्जनः सज्जनः ।
मुद्रामंडल–मन्त्र–तन्त्रमहिमा तावत्कृतं पौरुषम्, यावत्पुण्यमिदं नृणां विजयते पुण्यक्षये क्षीयते ॥ २५३ ॥
वने रणे शत्रु जला–ग्निमध्ये० । " २५४ ॥
छित्त्वा पाशमपास्य कूटरचनां भङ्क्त्वा बलाद् वागुराम्, पान्तेपुञ्ज्वदग्निजालजटिलाद् निर्गत्य दूरं वनाद् ।
व्याधानां शरगोचरादतिजवेनोत्प्लुत्य धावन् मृगः, कूपान्तः पतितः करोति विगुणे किंवा विधौ पौरुषम् ॥ २५५ ॥
कैवर्तकर्कशकरग्रहणाच्च्युतोऽपि जाले पुनर्निपतितः शफरो विवेकी ।
जालाद् पुनर्विगलितो गलितो बकेन वामे विधौ बत कुतो व्यसनान्निवृत्तिः ॥" २५६ ॥
परस्त्रीहरण–स्तैन्यादिकं पापमनर्गलम् । कृत्वा चौरस्तदा श्वभ्रे जगामानन्तदुःखदे ॥ २५७ ॥ यतः—
" एकस्यैकं क्षणं दुःखं मार्यमाणस्य जायते । स पुत्रपौत्रस्य पुनर् यावज्जीवं हृते धने ॥ २५८ ॥
चौर्यपापद्रुमस्येह वधबन्धादिकं फलम् । जायते परलोके तु फलं नरकवेदना ॥ २५९ ॥
दिवसे वा रजन्यां वा सुप्ते वा जागरेऽपि वा । सशल्य इव चौर्येण नैति स्वास्थ्यं नरः क्वचिद् ॥ २६० ॥
मित्र-पुत्र-कलत्राणि पितरो भ्रातरोऽपि हि । संसजन्ति क्षणमपि म्लेच्छैरिव न तस्करैः ॥" २६१ ॥

## ॥ अथ चतुर्थः सर्गः ॥

इतः सुकोमलाराज्ञी मत्वा कान्तं गतं तदा । रुदन्ती करुणं मात्रा पृष्टा तत्कारणं जगौ ॥ १ ॥
ययौ देवोऽधुना मातर् ! मां मुक्त्वा तेन रोदिमि । माता प्राह सुरः क्रीडां कर्तुं यातो भविष्यति ॥ २ ॥ यतः—
“ वापी-कूप-तडाकादि-काननेषु च कौतुकात् । दीव्यन्ति सततं तेन देवा इत्यभिधाऽभवद् ॥” ३ ॥
रुदन्ती तनया पित्रा पृष्टा तद्वज्जगौ पुनः । ततः पुत्रीं स्थिरीकर्तुमूचतुः पितराविति ॥ ४ ॥
तनये ! ते पतिर्दूरं यातोऽपि च मिलिष्यति । नो चेत् तदा त्वमत्रस्था धर्मध्यानपरा भव ॥ ५ ॥ यतः—
“ उपसर्गाः क्षयं यान्ति छिद्यन्ते विघ्नवल्लयः । मनः प्रसन्नतामेति पूज्यमाने जिनेश्वरे ॥ ६ ॥
पिता योगाभ्यासो विषयविरतिः सा च जननी । विवेकः सोदर्यः प्रतिदिनमनीहा च भगिनी ।
प्रिया क्षान्तिः पुत्रो विनय उपकारः प्रियसुहृत् सहायो वैराग्यं गृहमुपशमो यस्य स सुखी ॥” ७ ॥
गर्भं दत्त्वा गतः कान्तस्तेन खेदं कथं कुरु । यदि ते तनयः पूर्णमासे पुण्याद् भविष्यति ॥ ८ ॥
अर्पयिष्याम्यहं तस्मै देशं प्रौढं तदादराद् । भाविनी च सुता दास्ये तां तदाऽहं सुभूभुजे ॥ ९ ॥ यतः—
“ कुलं च शीलं च सनाथता च विद्या च वित्तं च वपुर्वयश्च । वरे गुणाः सप्त विलोकनीयास्ततः परं भाग्यवशा हि कन्या ॥१०॥
आकर्ण्यैतन्महीपाल-पुत्री सुस्थितमानसा । धर्मध्यानपरा गर्भं पालयामास सद्विधि ॥ ११ ॥ यतः—

वातलैश्च भन्द् गर्भः कुब्जा-न्ध-जड-वामन । पित्तलै खलति पिङ्गः श्वित्री पाण्डु' कफादिभि. ॥"१२॥
मपूर्णदोहदा पूर्णमासा शोभनवासरे । भूमिपाल. सुताऽसूत सुत सूर्यमिवेन्द्रदिक् ॥ १३ ॥
सन्मान्य सज्जनान् सर्वान् सद्म पानदानतः । दौहित्रस्याभिधा देवकुमारेति व्यधान्नृपः ॥ १४ ॥
धात्रीभि पञ्चभिर्लाल्यमान देवकुमारकम । दृष्ट्वा सुकोमला लेखशालायोग्य मुमोद च ॥ १५ ॥ यत'—
"उत्पतन् निपतन् रिङ्खन् हसन् लालावलीर्वमन् । कस्याश्चिदेव धन्यायाः क्रोडमाक्रमते सुतः " १६ ॥
अन्येद्युर्लेखशालाया पण्डितान्ते महीपति । कुर्वन् सदुत्सव सद्य पठनाय मुमोच च ॥ १७ ॥ यत.—
"माता शत्रु पिता वैरी बालो येन न पाठित. । न शोभते सभामध्ये हसमध्ये बको यथा ॥ १८ ॥
पितृभिस्ताडित. पुत्र शिष्यश्च गुरुशिक्षित' । घनाहत सुवर्णं च जायते जनमण्डनम् ॥" १९ ॥
पठन् सुकोमलासूनु. शश्वत् पण्डितसंनिधौ । निःशेषशस्त्र-शास्त्रादिकलानामभवन्निधि. ॥ २० ॥
" जले तैल खले गुह्य पात्रे दान-मनागपि । प्राज्ञे शास्त्र स्वय याति विस्तार वस्तुशक्तित. ॥ २१ ॥
आहार निद्रा भय मैथुनानि सामान्यमेतत् पशुभिर्नराणाम् । ज्ञा । विशेष खलु मानवानां ज्ञानेन हीना पशवो मनुष्या'॥"इत्यादि
अन्येद्यु कलह कश्चित् कुर्वाणो लेखशालिकः । सार्धं देवकुमारेण प्राहेति परुषाक्षरम् ॥ २३ ॥
रे ! रेऽपितृक ! क्षान्त-मत्र यावत् मया भृशम् । शालवाहनभूपाल तनयाननयत्तव' ॥ २४ ॥
अत पर न सोढेऽह-मपराध मनाङ् तव । ततो दध्याविद सत्यमिति देवकुमारकः ॥ २५ ॥

यदाऽऽहायामहं यामी–ति सभ्या मां तदा जगुः । नृपदौहित्रकागच्छ सुकोमलाङ्गज ! व्रज ॥ २६ ॥
भूपतेरमुकस्यैहि पुत्र? वक्तीति कोऽपि न । ध्यायन्नेव समेत्यावग् मातुरग्रेऽसितानन: ॥ २७ ॥
भो ! मातस्त्वं कथ चारुचूडिकाऽऽभरणावलीम् । परित्यक्से विना कान्तं ममाग्रे तद् वदाधुना ॥ २८ ॥
तयोक्तं ते पिता देवरूपोऽस्मान्छयनात् सदा । व्योम्न्युत्थाय ययौ क्रीडन् ततो दृष्टो मया न सः ॥ २९ ॥
देवा दीव्यन्ति सर्वत्र यतः कौतुकिनाशयाः । तेन संभाव्यते नूनं जीवन्नस्ति क्वचित् पिता ॥ ३० ॥
गते लोकेऽखिले स्वस्व–स्थाने भूभुग्दुहितृकः । शून्यो भित्ति गवाक्षादिभारपट्टं विलोकते ॥ ३१ ॥ यतः–
" अर्थातुराणां न सुहृन्न बन्धुः० ॥"३२ ॥
शून्यचित्तं सुतं वीक्ष्य जगौ माता सुकोमला । कुरुष्व भोजनं चिन्तां मुञ्चेमामधुना सुत ! ॥ ३३ यतः—
"चिन्तामिमां वहसि किं गजयूथनाथ ! योगीव योगविनिमीलितनेत्रयुग्मः ।
पिण्डं गृहाण पिब वारि यथोपनीतं दैवाद् भवन्ति विपदः खलु संपदो वा ॥"३४ ॥
पश्यन्नेवं पुनः सम्यक् चक्षुषा भारपट्टके । दृष्ट्वोत्थायाक्षराणीति वाचयामासिवांस्तदा ॥ ३५ ॥ तथाहि—
"अवन्ती नगरे गोपः परिणीय नृपाङ्गजाम् । गां पातुं दण्डभृत् पद्मोत्करक्रीडापरो ययौ ॥ ३६ ॥
दृष्टे च पुरुषे द्वे(द्वि)ष्टां कुर्वतीं काष्ठभक्षणम् । अहमेकोऽधुना वीरः परिणीय स्यादगाम् "॥ ३७ ॥
अतो हृष्टं सुतं वीक्ष्या–प्राक्षीद् मातेति नन्दनम् । हे ! पुत्र ! किं पितुः स्थानं त्वया ज्ञातं स वाऽऽगतः ॥३८॥

पुत्र प्राह मया ज्ञातः पिता तव प्रसादतः । मात्रोक्तं विद्यते यत्र तत्स्थानं कथयाद्य मे ॥३९॥
पुत्रोऽवक् प्रथमं मातः ! यत्रास्ति जनको मम । तत्र यास्याम्यहं तुभ्यं कथयिष्ये ततोऽचिरात् ॥४०॥
माता प्राह कथं तत्र सुरगम्ये त्वमेष्यसि । पुत्रः प्रोवाच तस्याहं पुत्रोऽस्मि तत्समः खलु ॥४१॥
माता प्राह सुरो देवी-वापी-वनविमोहितः । गत्वा तत्र स्थितस्तेना-त्रायाति न कदापि स ॥४२॥ यतः—
"'दिव्वालंकार विभूसणाइ रयणुज्जलाणि अ घराइं । रूवं भोगसमुदओ सुरलोगसमो कओ इहय ॥४३॥
देवाण देवलोए जं सुक्खं तं नरो सुभणिओ वि । न भणइ वाससएणवि जस्सवि जीहासयं हुज्जा ॥" ४४ ॥
हे पुत्र ! तत्र गत्वा त्व-मपि स्थास्यसि पितृवत् । तदा ममात्र तिष्ठन्त्या गतिः कीदृग् भविष्यति ॥ ४५ ॥ यतः—
"एकेनापि सुपुत्रेण सिंही स्वपिति निर्भयम् । सहैव दशभिः पुत्रै-र्भारं वहति गर्दभी ॥ ४६ ॥
एकेन वनवृक्षेण पुष्पितेन सुगन्धिना । वासितं तद्वनं सर्वं सुपुत्रेण कुलं यथा ॥"४७ ॥
नत्वा प्राह सुतो मातः ! जीवन्नस्म्यहकं यदि । तदैवात्र समेत्य त्वां नेष्यामि तत्र शीघ्रतः ॥ ४८ ॥
माता प्रोवाच भो पुत्र ! सत्यमेतत्त्वयोदितम् । पुत्रास्त एव कथ्यन्ते पित्रोर्हितकराश्च ये ॥४९॥ उक्तं च—
प्रीणाति यः सुचरितैः पितरं सुपुत्रो यद्भर्तुरेव हितमिच्छति तत्कलत्रम् ।

---

१ दिव्यालङ्कार विभूषणानि रत्नोज्ज्वलानि च गृहाणि । रूपं भोगसमुदयः सुरलोकसमः कृत इह ॥
देवानां देवलोके यत्सुखं तन्नरः सुभणितोऽपि । न भणति वर्षशतेनापि यस्यापि जिह्वाशतं भवेत् ॥

तन्मित्रमापदि सुखे च समक्रियं य-देतत्रयं जगति पुण्यकृतो लभन्ते ॥ ५० ॥
दीपाः स्थितं वस्तु विभासयन्ति, कुलप्रदीपास्तु पुनर्नवीनाः ।
चिरं व्यतीतानपि पूर्वजान् ये प्रकाशयन्ति स्वस्वगुणप्रकर्षात् ॥" ५१ ॥
सुकोमला जगौ पुत्र ! पशूनामपि जायते । स्नेहोऽपत्येषु सततं पुसां भवति का कथा ॥५२॥ उक्तं च—
आदाय मांसमखिलं स्तनवर्जमङ्गाद् मां मुञ्च वागुरिक ! यामि कुरु प्रसादम् ।
अद्यापि शस्यकवलग्रहणानभिज्ञा मन्मार्गवीक्षणपराः शिशवो मदीयाः ॥ ५३ ॥— हरिणीप्रोक्तम् ।
पुनर्हस्तिनोक्तम्—नो मन्ये दृढबन्धनं क्षतमिमं नैवाङ्कुशोद्घट्टनम्, स्कन्धारोहणताडनात्परिभवं नैवान्यदेशान्तरम् ।
चिन्तां मे जनयन्ति चेतसि गुणाः स्मृत्वा स्वयूथं वने । सिंहत्रासितजातभीतिकलभा यास्यन्ति कस्याश्रयम्" ॥५४॥
सुकोमला जगौ पुत्र ! गच्छ स्वच्छाशय द्रुतम् । स्मरणीया सदा चित्ते सततं भवताऽहकम् ॥ ५५॥
"मा गा इत्यपमङ्गलं व्रज इति स्नेहेन हीनं वचः, तिष्ठेति प्रभुता यथारुचि कुरुष्वेत्यप्युदासीनता ।
किं ते साम्प्रतमाचराम उचितं तत्सोपचारं वचः, स्मर्तव्या वयमेव मित्र ! भवता यावत्पुनर्दर्शनम् ॥५६॥
तत्र वर्त्मनि वर्ततां शिवं पुनरस्तु त्वरितं समागमः । अयि साधय साधयेप्सितं स्मरणीयाः समये वयं सुत! ॥५७॥
मातृपितृसमं तीर्थं विद्यते न जगत्त्रये । यतः प्राप्नोति सुलभो नृभवः शिवशर्मदः ॥"५८॥
ततो देवकुमारोऽवक् कार्यं दुःखं त्वया नहि । कृत्यं कृत्वा स्मरंस्त्वां चागमिष्याम्यचिरादिह ॥५९॥ यतः—

जह भद्दवए मासे भमरा समरंति चूअकुसुमाइं । तह भयवं मह हिअए समरइ तुम्हाण पयकमलम् ॥५८॥
इन्दुं कैरविणीव कोकपत्नीवाम्भोजिनीवल्लभम्, माकन्दं पिकसुन्दरीव तरुणी चात्मेश्वरं प्रोषितम् ।
मेघं चातकमण्डलीव मधुप-श्रेणीव पुष्पाकरम्, चेतोवृत्तिरियं ममाम्ब ! सततं त्वां द्रष्टुमुत्कण्ठते ॥"५९ ॥
लब्ध्वाऽथ मातुरादेशं प्रणम्य जननीं पुनः । मिलनाय पितुश्चक्रेऽसौ कुमार उपक्रमम् ॥ ६० ॥
जननीविरहं तथा-सहिष्णुर्विक्रमार्कजः । कष्टेन चलितो मुञ्चन्-नश्रूणि नगरात्ततः ॥ ६१ ॥ यतः—
" जणणी जम्मभूमी पच्छिमनिद्दा सुभासिआ गुट्ठी । मणइट्ठं माणुस्सं पंचवि दुक्खेण मुच्चंति ॥"६२ ॥
प्रतिष्ठानपुरादेव-कुमारः प्रस्थितो रहः । मिलनाय पितुः स्थानं ज्ञातुं खड्गसखा क्रमात् ॥ ६३ ॥
पश्यन् पदे पदेऽनेक-पुर-ग्राम-सरित्-गिरीन् । अवन्तीसन्निधिं प्राप्तो दध्यौ देवकुमारकः ॥ ६४ ॥
मम यो मातरं मुक्त्वा-ऽन्यत्रो राज्यरतोऽभवत् । अप्रकाश्यात्मनः शौर्यं कथं तस्य मिलाम्यहम् ॥ ६५ ॥
यो जातस्तनयो नैव स्वचरित्रेण शालिना । दत्ते मुदं पितुस्तेन जातेन सूनुना च किम् ॥ ६६ ॥
विना वेश्यागृहं नैव कार्यं सिध्यति कस्यचित् । तेनैव स्थीयते कस्या-श्चित् पण्ययोषितो गृहे ॥ ६७ ॥ यतः—
"विनयं राजपुत्रेभ्य पण्डितेभ्यः सुभाषितम् । अनृतं द्यूतकारेभ्य स्त्रीभ्यः शिक्षेत कैतवम् ॥ ६८ ॥

---

१ यथा भाद्रपदे मासे भ्रमराः स्मरन्ति चूतकुसुमानि । तथा भगवन् ! मम हृदयं स्मरति युष्माकं पदकमलम् ॥
२ जननी जन्मभूमिः पश्चिमनिद्रा सुभाषिता गोष्ठि । मनइष्टो मनुष्य पञ्चापि दुःखेन मुच्यन्ते ॥

नर्याणहिं रोअइ मणि हसइ जण जाणइ सहु सच्च । वेस विसट्ठह तं करइ जं कट्ठह करवत्त ॥"६९ ॥
ध्यात्वेति मुख्यवेश्याया गृहे देवः समीयिवान् । तया पृष्टं कुतः स्थानात् कस्त्वं किमर्थमागतः ॥ ७० ॥
देवः प्राहास्म्यहं चौरो वेश्ये ! सर्वहराभिधः । यतो मया धनं भूरि ह्रियते भूप-रैमताम् ॥ ७१ ॥
तयोक्तमहमात्मीय-गृहे दास्ये न ते स्थितिम् । ज्ञात्वा तत्र स्थितिं राजा सर्वं हरति मन्धनम् ॥ ७२ ॥ यतः—
" [1]चौरश्चौरापको मन्त्री भेददः क्रयविक्रयी । अन्नदः स्थानदश्चैव चौरः सप्तविधः स्मृतः ॥ ७३ ॥
वणिक् पण्याङ्गना दस्यु-र्हन्तद्न् पारदारिकः । द्वारावलग्निकः कौलः सप्तासत्यस्य मन्दिरम् ॥ ७४ ॥
संबन्ध्यपि निगृह्येत चौर्यान्मंडिकवन्नृपैः । चौरोऽपि त्यक्तचौर्यः स्यात् स्वर्गभाग् रौहिणेयवत् ॥ ७५ ॥
त्यक्त्वा तस्या गृहं देव-कुमारो धीधनस्ततः । वेश्याया सदनेऽन्यस्याः स्थातुं शीघ्रं समागमत् ॥ ७६ ॥
तत्रापि पूर्ववत्पण्यां-गनया जल्पितः पुनः । वेश्याया सदनेऽन्यस्याः स्थानं कर्तुं समागमत् ॥ ७७ ॥
पूर्ववत् मार्गिते स्थाने तेन वेश्या जगावदः । विषमा शोभने नैव गोष्ठी पुंसोर्मनागपि ॥ ७८ ॥ यतः—
अकालचर्या विषमा च गोष्ठी कुमित्रसेवा न कराऽपि कार्या । पश्याण्डजं पद्मवने प्रसुप्तं धनुर्विमुक्तेन शरेण ताडितम् ॥"
अत्र घूकगृहगतप्राघूर्णकहंसवधकथा ।
एवं गत्वा भ्रमन् भूरि-वेश्यानां सदने क्रमात् । न प्राप स्थानकं देव-कुमारः क्षणमेककम् ॥ ८० ॥

१ चौरः स्थापकमन्त्रीच भेदकः. ग.

यादृशे तादृशे कार्ये स्मर्तव्योऽहं न च त्वया । भूपोऽवग् गच्छ वेताल ! कुरु कार्यं समीहितम् ।। ९४ ।।
एवमुक्ते ययावग्नि-वेतालस्तत्क्षणात्तदा । देवद्वीपे महाश्चर्यं-कृन्नृत्यमीक्षितुं स्फुटम् ।। ९५ ।।
गत्वा चंडीगृहे स्तेनो नत्वा देवीमिदं जगौ । देवि ! त्वं सर्व लोकानां दत्से सततमीप्सितम् ।। ९६ ।।
विद्ये सर्वत्र विजया-दृश्यीकाराभिधे उभे । देवि ! देहि प्रसद्य त्वं मह्यं संप्रति सादरम् ।। ९७ ।।
न चेदहं करिष्यामि मस्तकेनार्चनां तव । एवमुक्ताऽपि नो यावन् मनाग् जल्पति चण्डिका ।। ९८ ।।
तावत्स्तेनोऽसिना सद्य-श्छेत्तुं शीर्षं समुद्यतः । ततो धृत्वा शये चण्डी तं प्रसन्ना जगावदः ।। ९९ ।।
भो ! भो ! सात्विक ! कोटीर ! हीर ! वीर ! मलिम्लुच ! । दत्ते विद्ये उभे तुभ्यं मया मुञ्चाग्रहं व्रज ।। १०० ।।यतः—
सदाचारस्य धीरस्य धर्मतो दीर्घदर्शिनः । न्यायप्रवृत्तस्य सतः सन्तु वा यान्तु वा श्रियः ।। १०२ ।।
नोपकारं विना प्रीतिः कथंचित् कस्यचित्भवेत् । उपयाचितदानेन यतो देवोऽपि चेष्टदः ।।" १०३ ।।
प्राप्तविद्यस्ततो देव्या स्तेनो निर्भयमानसः । एकाकी सत्त्ववान् पुर्यां भ्रमतिस्माखिलं दिनम् ।। १०४ ।।
समीहते तदा यद्यत् कार्यं कर्तुं मलिम्लुचः । सिध्यते हेलया तत् तत् तस्य प्राच्यप्रदयोदयात् ।। १०५ ।। यतः—
"एकोऽहमसहायोऽहं कृशोऽहमपरिच्छदः । स्वप्नेऽप्येवंविधा चिन्ता मृगेन्द्रस्य न जायते ।। १०६ ।।
रथस्यैकं चक्रं भुजगयमिताः सप्त तुरगाः, निरालम्बो मार्गश्चरणविकलः सारथिरपि ।
रविर्यात्येवान्तं प्रतिदिनमपारस्य नभसः, क्रियासिद्धिः सत्त्वे वसति महतां नोपकरणे ।। १०७ ।।

विजेतव्या लङ्का चरणतरणीयो जलनिधिः, विपक्षः पौलस्त्यो रणभुवि सहायाश्च कपयः ।
तथाप्येको रामः सकलमवधीद् राक्षसकुलम्, क्रियासिद्धिः सत्त्वे वसति महतां नोपकरणे ॥"१०८॥
प्राप्तदीपप्रसादः स स्तेनो नीत्वाऽखिलं दिनं । रजन्यामदृश्यीभूय पत्तीनां पश्यतां व्रजन् ॥ १०९ ॥
भूपान्तःपुरनाराम-पार्श्वे गत्वेत्यचिन्तयत् । अविधाय चमत्कारं न मिलिष्याम्यहं पितुः ॥ ११० ॥ यतः —
" आडम्बराणि पूज्यन्ते नतु ज्ञातेयडम्बरः । ग्रानेय गृह्यते पुष्प-माङ्गजस्त्यज्यते मलः ॥ १११ ॥
विचिन्त्येति महीपाल-पार्श्वे गत्वा मलिम्लुचः । सुखं प्रेक्ष्य सुगुप्तस्य पितुश्चाभूत् प्रमोदितः ॥ ११२ ॥
मातापित्रोः पदाम्भोजं ननाम भक्तिपूर्वकम् । निजं दर्शयितुं शौर्यं चमत्कारकृते पुनः ॥ ११३ ॥
भद्राविंशतिकोटीयुग-स्स्वर्णमूल्यैर्विभूषणैः । पूर्णां पेटीं महीपाल-राज्ञ्योर्मलिम्लुचो रहः ॥ ११४ ॥
प्रविश्य शयनस्थाप्यो गृहीत्वा यत्नतस्तदा । अदृश्यविग्रहः पश्चात् वेश्यासद्मप्रकमीयिवान् ॥११५॥ (त्रिभिर्विशेषकम्)
पूर्वविहितसङ्केतश्चोद्घाटितसद्मकः । विभूषणानि वेश्यायै दर्शयामास तस्करः ॥ ११६ ॥
कस्यैतानीति वेश्योक्ते स प्राह भूप-भार्ययोः । वेश्या दध्यावयं सत्य-स्तस्करः पश्यतोहरः ॥ ११७ ॥
भूषणानि महीपाल-पत्न्योः सद्यो जहार यः । तस्यान्येषां नृणां द्रव्या-पहारे का कथा भवेत् ॥ ११८ ॥
चौरोऽवग् गणिके ! पटा-भूषणैर्भरिताऽनया । रक्षणीया त्वयेदानीं यत्नतः स्वशरीरवत् ॥ ११९ ॥
मम परमद् पर द्रव्यानेष्यामि पुरान्तरात् । तदेष त्वया प्राप्य अलंतन्मुदिता च सा ॥ १२० ॥ यतः—

'जहा लाहो तहा लोहो लाहा लोहो पवड्ढइ । दोमासकणयकज्जं कोडीए वि न निट्ठिअं ॥ १२१ ॥
महीयसाऽपि लाभेन लोभो न परिभूयते । मात्रा समधिकः कुत्र मात्राहीनेन जीयते ॥ १२२ ॥
३ आशैव राक्षसी पुंसा-माशैव विषमञ्जरी । आशैव जीर्णमदिरा धिगाशा सर्वदोषभूः ॥ १२३ ॥
शरीरं श्लथते नाशा रूपं याति न पापधीः । जरा स्फुरति न ज्ञानं धिक् स्वरूपं शरीरिणाम् ॥"१२४ ॥
रसवत्यादिना स्तेनो वेश्यया प्रीणितो भृशम् । गृहमध्यस्थितो धर्म-ध्यानलीनोऽभवत्तदा ॥१२५॥
६ इतः प्रातः समुत्थाय शय्याया मेदिनीपतिः । परिधातुमना यावद् भूषणानि विलोकते ॥ १२६ ॥
तावत्पेटां नृपोऽपश्यन् प्राह पेटाऽस्ति क्व प्रिये ! । राज्ञी प्रोवाच शय्याऽधो मुक्ता स्वामिन् ! मया निशि ॥ १२७ ॥
राजा प्राह त्वयाऽन्यत्र मुक्ता संभाव्यते प्रिये ! । प्रिया जगौ मयाऽत्रैव मुक्ता पेटाऽथ सा तदा ॥ १२८ ॥
९ राजावगीदृशे स्थाने विषमे कोऽपि तस्करः । प्रविश्य रजनौ पेटां लात्वा नूनं ययौ प्रिये ! ॥ १२९ ॥
कश्चिदेवंविधे स्थाने यद्येति विषमे रहः । मारयिष्यति मां चेत् स तदा भवति का गतिः ॥ १३० ॥ यतः—
अमेध्यमध्ये कीटस्य०
१२ जीवो जीवितलाभेन मार्यमाणोऽपि निर्दयैः । राज्यसौख्यमपि प्राज्यं न वाञ्छति कदाचन ॥ १३१ ॥
द्रष्टुं पदानि पदिका भूभुजाऽऽकारिता जगुः । विलोकिताऽपि तैः सम्यग् न ज्ञाता पदपद्धतिः ॥ १३२ ॥

---

१. यथा लाभस्तथा लोभो लाभाद् लोभः प्रवर्धते । द्विमाषकनककार्यं कोट्यापि न निष्ठितम् ॥

भूपो जगौ तमारक्षा ! यूयं किं क्व गता निशि । अथवा यत्नतो गेहं भवन्तो रक्षन्ति न मे ॥ १३३ ॥
ते प्राहुर्यत्नतः स्वामिन् ! गतनिद्रा वयं निशि । रक्षेम भवतो गेहं भ्रमन्तः सर्वतो भृशम् ॥ १३४ ॥
ततो राजा सभाऽऽसीनो भट्टमात्रादिधीसखान् । आकार्य निशि वृत्तान्तं सर्वमुक्त्वा जगौ पुनः ॥ १३५ ।
चौरो नैर्वृते स्थाने भूषणार्थं समाययौ । किं त्वयं ज्ञापयत्येव मम सम्पति सात्त्विकः ॥ १३६ ॥
अहमस्मि स्फुरद्विद्या-सिद्धो विद्याधराग्रणीः । अदृश्यीकरणप्रौढ-मन्त्रादृश्यवपुर्नरः ॥ १३७ ॥
यः कश्चिद् भवतो राज्ये विद्यते कोविदोत्तमः । स एवं विधिना सद्यः प्रकटीकुरुतात् खलु ॥ १३८ ॥
अथाह भवतः पेटा भूषणैर्भरिता भृशम् । लात्वा गतोऽस्मि विघ्नं ते करिष्यामि प्रगे पुनः ॥ १३९ ॥
तेनेदं ज्ञायते नूनं स एव सात्त्विकाग्रणीः । त्याजयित्वा च मां राज्यात् गृहीष्यत्यचिरात् श्रियम् ॥ १४० ॥
दुःसाध्यः खर्परश्चौरो निगृहीतो मया पुरा । एतन्निधोऽधुना दुष्टोऽभवत्स्वौकःप्रवेशनात् ॥ १४१ ॥
प्रविश्य धनिनां गेहे रहो रात्रौ न तस्करः । अयं खर्परवल्लक्ष्मीं हरिष्यति न संशयः ॥ १४२ ॥
विचार्येति नृपो हस्ते विधाय बीटकं जगौ । यः कर्षिष्यति तं चौरं स मान्यते रमया मया ॥ १४३ ॥
तादृग्भूपालसदने प्रवेशात् तस्करं तदा । विज्ञाय बलिनं कोऽपि गृह्णाति बीटकं नहि ॥ १४४ ॥
मतिसारस्ततो मन्त्री प्राहेति सुभटान् प्रति । यो राज्ञः कुरुते कार्यं स सत्यः सेवको भवेत् ॥ १४५ ॥
“ युद्धकालेऽग्रगो यः स्यात् सदा पृष्ठानुगः पुरे । प्रभोर्द्वाराश्रितो गेहे । स भवेन् राजवल्लभः । १४६ ॥

चित्तज्ञः शीलसम्पन्नो वाग्मी दक्षः प्रियंवदः । यथोक्तजल्पको भूप-भक्तो भृत्यः प्रशस्यते ॥ १४७ ॥
न विना पार्थिवो भृत्यै-र्न भृत्या पार्थिवं विना ॥ १४८ ॥
राजा तुष्टोऽपि भृत्यानामर्थमात्रं प्रयच्छति । तेऽपि सन्मानमात्रेण प्राणैरप्युपकुर्वते ॥" १४९ ॥
आकर्ण्यैतद् वचो मन्त्रि-प्रोक्तं सिंहस्तलारकः । ग्रहीतुं बीटकं सद्य उत्तस्थौ भूपतेः पुरः ॥ १५० ॥
तलारो बीटकं लात्वा प्रोवाचेति दिनत्रये । चौरं स्वस्वामिनः पार्श्वे आनेष्यामि प्रपञ्चतः ॥ १५१ ॥
नो हि चेत् स्वामिना चौर-दण्डः कार्यो ममाचिरात् । एवं कृत्वा तलारक्षः प्रतिज्ञां चलितस्ततः ॥ १५२ ॥
द्विक-त्रिक-चतुःस्थाने पाटके पाटकेऽभितः । स्तेनं धर्तुं तलारक्षो मुमोच सुभटान् निजान् ॥ १५३ ॥
तलारक्षश्चतुरशी-तिहट्टश्रेणिषु सर्वतः । तृतीयदिवसस्यान्ते पूर्वद्वारि ययौ भ्रमन् ॥ १५४ ॥
इतः पणाङ्गना पृष्टा स्तेनेनेति जगौ स्फुटम् । प्रतिज्ञामकरोत् स्तेनं धर्तुमत्र तलारकः ॥ १५५ ॥
भ्रामं भ्रामं तलारोऽत्र चेदेष्यति कदाचन । तदा गतिर्भवेत्का मे तव च ब्रूहि तस्कर ! ॥ १५६ ॥
आदौ च यत् त्वया चौर्यं विहितं राजवेश्मनि । तत्कृतं शोभनं नैव भूपाला दुःशका यतः ॥ १५७ ॥ यतः—
" शल्य-वह्नि-विषादीनां सुकरैव प्रतिक्रिया । सहसाकृतकार्योत्था-नुतापस्य तु नौषधम् ॥ १५८ ॥
भद्दा भूप भुअंगमा ए मुहि दोहिला हुंति । वयरी विंछी वाणीआ पूठिं दोह दीअन्ति ॥" १५९ ॥
तेनास्मात्स्थानकाद् गत्वाऽन्यत्र तिष्ठ रहो बहिः । संपूर्णायां प्रतिज्ञायामागन्तव्यं त्वया किल ॥ १६० ॥

एव ममापि भवनः कुशल च भविष्यति । अन्यथा कपम्ते चित्त मदीय ध्वजवस्त्रवत् ॥ १६१ ॥
चौर' प्राह न भेतव्य भवत्याऽत्र मनागपि । करिष्याम्यचिराद् भूरिश्रीयुता त्वामह ननु ॥ १६२ ॥
हृष्टा वेश्या जगौ चौर ! त्व धन्यो निर्भयोऽसि च । ईदृक्षसङ्कटे जाते यतो धीरष्टधा तव ॥ १६३ ॥ यतः—
" सीह सउण न चन्दबल० " ॥ १६४ ॥
चौरोऽप्राक्षीत् कियदस्ति तलारस्य कुटुम्बकम् । वेश्याऽवग् विद्यते तस्य पुत्रो नैकोऽपि सम्प्रति ॥ १६५ ॥
सोमाह्वाभगिनीपुत्र' सप्ताब्दः श्यामलाभिव. गङ्गा--गोदावरीतीर्थ-यात्रायै प्रययौ स तु ॥ १६६ ॥
वर्षाण्यष्टौ ययुस्तस्य तीर्थयात्रागतस्य च । अथ यावन्नचायात श्यामलस्त्वत्समाङ्गरुक् ॥ १६७ ॥
अथ कल्ये परेद्युर्वा यास्यतीति श्रुत मया । श्रुत्वैतत्तस्करः प्राह गमिष्यामि पुरान्तरे ॥१६८॥
यदा चैत्य त्रियामाया वादयिष्यामि झम्पकम् । भवत्याशु तदा गत्योद्घाटनीयश्च झम्पकः ॥ १६९ ॥
वेश्या जगौ यदैपि त्व झम्प च वादयिष्यसि । करिष्येऽह त्वदुक्तं तत् सर्वं स्तेनशिरोमणे ! ॥ १७० ॥
ततो मलिम्लुचो हृष्ट-चित्तो वेश्यानिकेतनात् । निःससार गताशङ्को द्रष्टु भूयः पुरीं तदा ॥ १७१ ॥
दर्श दर्शं पुरीमध्ये कौतुकानि पदे पदे । क्षेप्तु विघ्ने तलारक्ष विलोकयति सर्वत ॥ १७२ ॥
गत्वा कार्पटिकावासे लात्वा कावडिका तथा । कृत' तीर्थिकवेषः सन् स्तेनो बभ्राम सर्वतः ॥ १७३ ॥
पूर्वद्वारि तलारस्य क्षुधापीडितवर्ष्मणः । मिलित्वा सम्मुखं मामे-त्युक्त्वा ननाम तीर्थिकः ॥ १७४ ॥

आकार-वर्ण-रूपेणो–पलक्ष्य भागिनेयकम् । तलारोऽवक् त्वया यात्रा कस्य कस्य कृता ननु ॥ १७५ ॥
भागिनेयो जगौ माम ! प्रसादाद् भवतोऽनघात् । गङ्गा–गोदावरीमुख्य- तीर्थयात्रा कृता मया ॥ १७६ ॥
लाहि गङ्गोदकं गाङ्गं रजो गोदावरीपयः । ततस्तेनार्पितं तत्तद् गृहीतं निखिलं मुदा ॥ १७७ ॥
श्यामलोऽवक् कथं माम ! कृष्णमास्यं तवाधुना । तलारः कथयामास प्रतिज्ञां स्वी तदग्रतः ॥ १७८ ॥
भागिनेयो जगौ माम ! प्रतिज्ञा यत्त्वया कृता । भूपोपान्ते न तच्चारु यतो दुष्टा महीभुजः ॥ १७९ ॥ यतः—

" काके शौचं द्यूतकारे च सत्यं, सर्पे क्षान्तिः स्त्रीषु कामोपशान्तिः ।
क्लीबे धैर्यं मद्यपे तत्त्वचिन्ता राजा मित्रं केन दृष्टं श्रुतं वा ॥"१८० ॥

अतो धनकुटुम्बादि स्थाप्यते साम्प्रतं रहः । नो चेद् भूमिपतिः सर्व–श्रियं तव हरिष्यति ॥ १८१ ॥
सिंहः प्राह त्वया सत्यं जल्पितं भागिनेयक ! । किं कुर्वेऽहं गृहे गन्तुं न शक्नोम्यधुना मनाक् ॥ १८२ ॥
दुष्टो भूपो न जानेऽहं किं करिष्यति मेऽधुना । तेन त्वं सदने गत्वा मिलित्वेदं द्रुतं कुरु ॥ १८३ ॥
श्री–कुटुम्बे रहोऽशेषे कृत्वा तिष्ठ निकेतने । श्यामलोऽवक् कथं ब्रूषे (ब्रुवे) एवं तत्रागतोऽहकम् ॥ १८४ ॥
तेन त्वं सेवकं कंचि–दाप्तं सार्धं मयाऽधुना । द्रुतं कथयितुं तं च प्रेषय त्वं हि मातुल ॥ १८५ ॥
तलारप्रेषितः स्वीय–पत्तियुक् श्यामलः पथि । व्रजन् प्राह तलारक्ष–सेवकं भागिनेयकः ॥ १८६ ॥
भो ! भो ! तलारपत्ते ! हि वक्तव्यं भवता द्रुतम् । मातुलोक्तं कुटुम्बाद्य(द्य) गर्भितं मम पश्यतः ॥ १८७ ॥

बहुभिर्हायनैरागतोऽस्मि साम्प्रतं ननु । देहवर्णपरावृत्तिर्भ्रमतो मेऽभवत्पुन' ॥ १८८ ॥
गत्वाऽग्रे सेवकः प्राह तलारक्षप्रियेऽधुना । भागिनेयस्तवायातः तीर्थयात्रां विधाय च ॥ १८९ ॥
तलारक्षस्वस्त्रस्तेऽद्य यात्रां कृत्वा ययौ सुतः । भागिनेये ! तव भ्राता–चागत, स्वागतं कुरु ॥ १९० ॥
श्रुत्वेति श्यामल, शीघ्रं मामकीत्यादिपूर्वकम् । चकार विनयं सम्यग् यथायोग्यं पृथक् पृथक् ॥ १९१ ॥
आगतं श्यामलं दृष्ट्वा हृष्टा मात्रादयोऽचिरात् । गङ्गोदकादि सर्वासां तीर्थिकं प्रददौ तदा ॥ १९२ ॥
पत्नि, प्राह तलारक्ष प्रोवाचेति मदाननात् । युष्माभिर्निखिला लक्ष्मी' स्थापनीया रहोऽचिरात् ॥ १९३ ॥
अद्य यावन्नहि स्तेनो लब्धोऽस्ति भूरिवीक्षित' । न ज्ञायते ततो भूपो रुष्टः किं किं करिष्यति ॥ १९४ ॥
इत्युक्त्वा सेवक' पश्चात् तलारोपान्तमेत्य च । जगौ स्वामिंस्त्वदीयोक्तं मया चक्रेऽखिलं ध्रुवम् ॥ १९५ ॥
इतोऽवक् मामिकाऽऽकार्य भागिनेयं भयाकुला । स्थापय त्वं रमा' सर्वां रह स्थानेऽधुना चिरात् ॥ १९६ ॥
त्वदीयमातुलेनैवंपरस्यास्येन निवेदितम् । यथा कोऽपि नरो नैव जानाति स्थापितां रमाम् ॥ १९७ ॥
मामिका भागिनेयाया–दर्शयन्निखिलं धनम् । भागिनेयो जगौ कोष्ठ्या मामिके ! प्रविश द्रुतम् ॥ १९८ ॥
शाटीं स्वां त्वं ममाज्ञायार्पय नोचेन्नरेश्वर, । शाटिकाद्यखिलं सर्वं ग्रहीष्यति न संशयः ॥ १९९ ॥
दृष्टा नरेश्वरा दुष्ट मानसा निर्दयाः खलु । तृणमात्रमपि धनं न मुञ्चन्त्यनला इव ॥ २००
कोष्ठ्यां प्रविश्य शाटीं प्राग् भागिनेयाय सा ददौ । चिक्षेप जननीं गोणि–मध्येछन्नं शठाशयः ॥ २०१ ॥

गोद्दडकान्तरे जामिं प्रक्षिप्येदं जगाद सः । यदि कश्चिन्नरोऽभ्येत्या-त्र मनाक् शब्दयिष्यति ॥ २०२ ॥
भवन्तीभिस्तदा नव वक्तव्यं बहु जल्पने । ततस्ता निखिलास्तस्थुर्मौनमाधाय शीघ्रतः ॥ २०३ ॥
लात्वा भूमिगतं द्रव्यं बाह्यं च भागिनेयकः । मुक्त्वा कावडिकां गेह-मध्येऽचालीत् तदा रहः ॥ २०४ ॥ यतः—
" चोरा चुल्लका विय दुज्जणविज्जा य विप्पपाहुणया । नच्चण-धुत्त-नरिंदा परस्स पीडं न याणंति ॥ २०५ ॥
पूर्वविहितसंकेत-वेश्योद्घाटितझम्पकः । गृहमध्ये द्रुतं गत्वा तस्करोऽदर्शयत् धनम् ॥ २०६
कस्येदं विद्यते द्रव्यमित्युक्ते पणयोषिता । स्तेनः प्राह तलारस्य हृत्वाऽऽनीतं धनं मया ॥ २०७ ॥
वेश्या दध्यावयं सत्यः तस्करः पश्यतोहरः । द्रव्यं सद्यः तलारस्य गेहमध्याऽज्जहार यः ॥ २०८ ॥
तस्यान्येषां नृणां द्रव्यापहारे का कथा पुनः । चौरः प्राह धनमिदं गृह्णातु भवती द्रुतम् ॥ २०९ ॥
वेश्या दध्यावयं चौरोऽपूर्वो दात्रादिसद्गुणात् । यत एवंविधाश्चौरा दृश्यन्ते न कदाचन ॥ २१० ॥
तलारक्षः प्रगे राजपार्श्वे गत्वेदमूचिवान् । दिनत्रयं क्षुत्-तृड्युजा चौरो विलोकितः ॥ २११ ॥
नैव लब्धो मया स्वामिन् ? तस्करो भ्रमता पुरे । कुरुष्व स्तेनदण्डं मे शिरश्छेदादिना द्रुतम् ॥ २१२ ॥ यतः—
दुष्टस्य दण्डः स्वजनस्य पूजा न्यायेन कोशस्य सदैव वृद्धिः । अपक्षपातो रिपुराष्ट्रचिन्ता पञ्चैव यज्ञाः कथिता नृपाणाम्॥२१३
चित्तज्ञः शीलसम्पन्नः० ॥" २१४ ॥
भक्तिगर्भं तलारोक्तं श्रुत्वा हृष्टो नृपोऽवदत् । गच्छ त्वं स्वगृहे सद्यो दूषणं तव नो मनाक् ॥ २१५ ॥

यो मम शयनागारे प्रविश्य विषमेऽपि च । भूषणानि रहो लात्वा सद्यो रात्रौ ययौ क्वचिद् ॥ २१६ ॥
स कथं लभ्यते स्तेनो भवता भ्रमता भृशम् । तेन त्वं स्वगृहं याहि मत्तो निर्भीकमानसः ॥ २१७ ॥ यतः —
"दुर्बलानामनाथानां बाल-वृद्ध-तपस्विनाम् । अन्यायैः परिभूतानां सर्वेषां पार्थिवो गुरुः ॥२१८ ॥
आज्ञाभङ्गो नरेन्द्राणां वृत्तिच्छेदो द्विजन्मनाम् । पृथक् शय्या च नारीणामशस्त्रो वध उच्यते ॥" २१९ ॥
नत्वा भूपं तलारक्षो गत्वा गेहमिदं जगौ । हे प्रिये ! एहि मुञ्च त्वं पादप्रक्षालनाम्बु मे ॥ २२० ॥
एवमुक्ते भृशं भार्या यदा जल्पति नो मनाक् । तदाऽऽह सोमिके ! किं त्वं नो हि जल्पसि साम्प्रतम् ॥ २२१ ॥
एवं पुनः पुनः प्रोक्ते तदेति सोमिका जगौ । अहमत्र च गोमाणिमध्येऽस्मि च निरम्बरा ॥ २२२ ॥
भागिनेयाऽपि तेनैव पृष्टा प्रोवाच पूर्ववत् । तलारक्षो जगौ कुत्र विद्यते भागिनेयकः ॥ २२३ ॥
ताभिरुक्तं धनं सर्व- मस्मद्वस्त्रादिसंयुतम् । न्यासीकुर्वन् क्वचिद् भागि नेयः सम्प्रति वर्तते ॥२२४॥
तेनादौ[1] भागिनेयस्य पार्श्वाद् वस्त्राणि वेगतः । आनीय देहि नो निस्स -रिष्यामो वयकं यथा ॥ २२५ ॥
ततः स लोकते यावद् भागिनेयं गृहान्तरे । तावच्छून्यं गृहं भागि -नेय -श्रीभ्यां ददर्श च ॥ २२६ ॥
ततो व्याकुलचेतस्क -स्तलारो ध्यातवानिति । हहा ! कश्चिन्महाधूर्तो हृत्वा लक्ष्मीं गतोऽधुना ॥ २२७ ॥
दृष्ट्वा कावडिका गेहा -न्तरे सद्यस्तलारकः । दध्यौ स तस्करो धर्म-व्याजेन च वयश्च माम् ॥ २२८ ॥

१ तेनादौ देहि वस्त्राण्य-स्मभ्यं तानि ददौ स च । तलारो लोकते यावत् गृहमध्ये च तं तदा ॥ ग

ध्यायन्नेवं तलारक्षो मूढात्मा न्यपतद् भुवि । निःसृत्य तत्क्षणात्सर्वं तत्रैयाय कुटुम्बकम् ॥ २२९ ॥
चौरः सर्वं धनं लात्वा छलेन तत्क्षणाद् गतः । इत्यादिजल्पनपरं बहिस्थः सेवकोऽशृणोत् ॥ २३० ॥
३ 'चौर' इत्यक्षरश्रेणीं श्रुत्वा तलारसेवकः । गत्वा भूपान्तिके सद्यः प्राहेति गद्गदस्वरम् ॥ २३१ ॥
प्रविष्टं तस्करं सौत्र–गृहे दृष्ट्वा तलारकः । गृह्णानस्तस्करेणाथ–श्चक्रे क्रूरात्मनाऽधुना ॥ २३२ ॥
निग्रहीतुं द्रुतं तेन पूज्या धावत धावत ! । आकर्ण्यैतत्तलारक्ष–गेहं भूपः समीयिवान् ॥ २३३ ॥
६ तलारं पतितं भूमौ निश्चेष्टं वीक्ष्य भूपतिः । शीतोपचारकरणा––च्चकाराशु सचेतनम् ॥ २३४ ॥
निःशेषद्रव्यहरणात् तस्करेणेति जल्पनात् । तलारोऽवग् मम प्राणाः करिष्यन्ति प्रयाणकम् ॥ २३५ ॥ यतः—
"एकस्यैकं क्षणं दुःखं मार्यमाणस्य जायते । सपुत्रपौत्रस्य पुन–र्यावज्जीवं हृते धने ॥" २३६ ॥
९ अभिमानो मदीयोऽद्य गतः सर्वोऽधुना क्षयम् । तेनाऽन्यत्र गमिष्यामि दूरदेशे क्वचित्प्रभो ! ॥ २३७ ॥
नृपः प्राहात्र भवता धार्यं दुःखं मनाग् नहि । भूषणानि रहो लात्वा योऽस्माकं तस्करो ययौ ॥ २३८ ॥
तेन त्वया तलारक्ष ! कार्यः खेदो न चेतसि । नहि केषां स्थिरा नृणां लक्ष्मीर्भवति निश्चितम् ॥ २३९ ॥ यतः—
१२ "दानं भोगो नाशस्तिस्रो गतयो भवन्ति वित्तस्य । यो न ददाति न भुङ्क्ते तस्य तृतीया गतिर्भवति ॥ २४० ॥
दायादाः स्पृहयन्ति तस्करगणा मुष्णन्ति भूमीभुजो, गृह्णन्ति च्छलमाकलय्य हुतभुग् भस्मीकरोति क्षणात् ।
अम्भः प्लावयति क्षितौ विनिहितं यक्षा हरन्ते हठाद्, दुर्वृत्तास्तनया नयन्ति निधनं धिग् ! बह्वधीनं धनम् ॥" २४१ ॥

एवं स्वर्णं तन्नारश कृत्वा लक्ष्मीसमर्पणात् । भूपः कौतुकितस्वान्तो निजावासमुपेयिवान् ॥ २४२ ॥
उपविश्य सभामध्ये पुनः सारपरिच्छदः । बीटकं स्वकरे कृत्वा प्रोवाचेति महीपतिः ॥ २४३ ॥
सभागः कोऽपि वीरोऽस्ति गृत्वा सम्प्रति तस्करम् । योऽत्रानयति मत्पार्श्वे गृह्णातु बीटकं स च ॥ २४४ ॥
श्रुत्वेनत्स्वामिनो वाक्यं भट्टमात्रो मुदा तदा । गृहीत्वा बीटकं भूपा-र्पितं प्राहेति संसदि ॥ २४५ ॥
यद्यहं तस्करं यम-पयमध्ये द्रुतं प्रभो ! । नानेष्यामि तदा चौर-दण्डः कार्यस्त्वया मम ॥ २४६ ॥
इत्युक्त्वा भूपतिं नत्वा भट्टमात्रो नमच्छिराः । निःससार सभामध्या- देकाकी खड्गसंयुतः ॥ २४७ ॥
द्विक-त्रिक- चतु.स्थाने पाटके पाटकेऽभित. । मुमोच सुभटान् स्तेन धर्तुं भट्टो रहो निजान् ॥ २४८ ॥
भट्टमात्रश्चतुरशी-स्यट्टश्रेणिषु सर्वतः । रहो द्रष्टयाऽनिशं स्तेन धर्तुं बभ्राम निर्भयः ॥ २४९ ॥
इतस्ततो जगावक्ष' का वार्ताऽस्ति पुरे वद । वेश्याऽवग् भट्टमात्रेण परेद्युरिति जल्पितम् ॥ २५० ॥
"यद्यहं तस्करं यम० ॥ २५१ ॥ इत्युक्त्वा नृपतिं नत्वा बहिरागत्य० ॥ २५२ ॥"
स्थाने स्थाने रहोवृत्त्या भट्टमात्रो दिवानिशम् । भ्रमन्नेष्यति नेदन्न तदा मे का गतिर्भवेत् ॥ २५३ ॥ यतः—
"वेश्याऽक्षा नृपतिश्चौरो नीरं मार्जार-मर्कटा. । जातवेदाः कलादश्च न विश्वास्या इमे क्वचित् ॥ २५४ ॥
चौर्यपापद्रुमस्येह० ॥"२५५ ॥
चौर' प्राह न भेतव्यं भवत्याऽत्र मनागपि । करिष्येऽहं तथा चौर्यं यथा स्यात् सुखमावयोः ॥ २५६ ॥ यतः—

" उद्यमं साहसं धैर्यं बलं बुद्धिः पराक्रमम् । षडेते यस्य विद्यन्ते तस्य देवोऽपि शङ्कते ।" २५७ ॥
त्वं बिभेषि कथं वेश्ये ! छलकूटादितत्परा । श्रूयन्तेऽखिलशास्त्रेषु पण्यनार्योऽखिलाः खलु ॥ २५८ ॥ यतः—
नयणेहिं रोइ मणि हसइ जण जाणइ सव सच्च । वेस विसट्ठह जं करइ तं कट्ठह करवत्तु ॥ २५९ ॥
उपभुक्तखदिरवीटकरक्ता-धरदन्तभङ्गभयात् । पितरि मृतेऽपि हि वेश्या रोदिति हा तात ! तातेति ॥ " २६० ॥
विधेया न त्वया भीति-रत्रेदानीं पणाङ्गने ! । भूपा एवानने दुष्टाः श्रूयन्ते शास्त्रमध्यतः ॥ २६१ ॥ यतः—
" भद्दा भूप भुअंगम ए मुहि दुहिला हुंति । वयरी वींछो वाणीआ पूठिं दाह दिअंति ॥" २६२ ॥ "
यस्य कस्याप्यहं पार्श्वे स्थितश्चौर्यपरो रहः । तस्य क्षोणीपतिर्मानं भूरिलक्ष्म्या प्रदास्यति ॥ २६३ ॥
हृष्टा वेश्या जगौ चौर ! त्वं धन्यो निर्भयोऽसि च । ईदृक्षे सङ्कटे जाते यतो नास्ति भयं तव ॥ २६४ ॥ यतः—
"कदर्थितस्यापि हि धैर्यवृत्ते- र्न शक्यते सत्त्वगुणः प्रमार्ष्टुम् । अधोमुखस्यापि कृतस्य वह्ने-र्नाधः शिखा याति कदाचिदेव॥२६५॥
श्रुत्वैतत्तस्करः प्राह गमिष्यामि पुरान्तरे । यदैत्याहं च यामिन्यां वादयिष्यामि झम्पकम् ॥ २६६ ॥
भवन्त्याऽऽशु तदा गत्वो-द्घाट्यश्च फलकः शनैः । प्राप्ताप्राप्तधनाश्चौराः समेष्यन्ति यतो निशि ॥ २६७ ॥
वेश्या जगौ यदैत्य त्वं झम्पकं वादयिष्यसि । करिष्येऽहं त्वदुक्तं तत् सर्वं स्तेनशिरोमणे ! ॥ २६८ ॥
ततो मलिम्लुचो देव-कुमारो गणिकालयात् । निस्ससार गताशङ्को द्रष्टुं सर्वां पुरीं तदा ॥ २६९ ॥
भ्रमताऽदृश्यरूपेण स्तेनेन निखिले पुरे । भट्टमात्रो भ्रमन् सायं दृष्टो वैलक्ष्यमानसः ॥ २७० ॥

भ्रमतो भट्टमात्रस्या-विश्राम निखिले पुरे । तृतीयदिवसस्यागात् सन्ध्या कृतान्तसन्निभा ॥ २७१ ॥
रात्रौ सुप्तेषु लोकेषु सर्वेषु तस्करस्तदा । क्षिप्त्वा पादं निजं नीच-हड्या तस्थौ च निर्भय. ॥ २७२ ॥
इतो भ्रान्त्वा पुर सर्वं भट्टमात्रं भृशं तदा । व्रजन्तमग्रतो वीक्ष्य छन्नं प्राहेति तस्करः ॥ २७३ ॥
हे अमात्य महाबुद्धे भट्टमात्र नरोत्तम । क्व गच्छसि किमर्थं त्व त्वरित त्वरितं वद ॥ २७४ ॥
श्रुत्वैतच्चकितो भट्ट-मात्रः पश्चात्समेत्य च । पप्रच्छात्रासि भो कस्त्वं केनात्र स्थापितो वद ॥ २७५ ॥
सोऽवग् निष्कारण राज्ञा हड्या क्षिप्तोऽस्मि निर्दयम् । विलोकयसि किं मां न दीन कष्टेन सस्थितम् ॥ २७६ ॥
अमात्योऽवग् मया चक्रे प्रतिज्ञा भूपते पुर. । धर्तुं चौरं स चाद्यापि कुत्र लुब्धः श्रुतोऽपि न ॥ २७७ ॥
तेनातीव मम स्वान्ते दु ख सम्प्रति विद्यते । यतो नैव महीपाला आत्मीया. स्युः कदाचन ॥ २७८ ॥ यतः—
" काके शौच द्यूतकारे च सत्यं० ॥" २७९ ॥
चौरोऽवग् यदि मे ग्रामान् भूरिशो दापयाचिरात् । तदा तस्येह धरणी-पार्श्वे च कथयाम्यहम् ॥ २८० ॥
भट्टमात्रो जगौ 'स्तेन यदि त्व दर्शयिष्यसि । तदा तुभ्यं बहून् ग्रामान् दापयिष्याम्यह नृपात् ॥ २८१ ॥
हड्डिस्थः पुरुषः प्राह तनयोऽह प्रजापते । भीमाह्वो मिलितस्तस्य चौरस्य दैवयोगत. ॥ २८२ ॥
स्तेनोऽवक् त्व मया सार्द्धं-मायास्यसि पुरे यदि । तदा तुभ्यं धन भूरि दास्येऽहं चौर्यतः खलु ॥ २८३ ॥

---

१ मर्त्यं । ग । २ पुरस्य क ग

लोभात् ततो मया तेन सार्द्धं भ्रान्तं च दस्युना । मह्यं किमपि नो वस्तु ददौ चौरः कदाचन ॥ २८४ ॥ यतः—
" कोहो पीइं पणासेइ माणो विणयनासणो । माया मित्ताणि नासेइ लोभो सव्वविणासणो ॥ " २८५ ॥
तत्सङ्गत्याऽधुना चौर–भ्रान्त्या धृत्वा महीपतिः । हडौ मामत्र चिक्षेप दीनं तादृशसङ्गतेः ॥ २८६ ॥ यतः—
" अंबस्स निंबस्स य दुण्हंपि समागयाइं मूलाइं । संसग्गा इ विणट्ठा अंबो निंबत्तणं पत्तो ॥ २८७ ॥
सदा दुर्जनसंसर्गो विपदे वृत्तशालिनाम् । वारिहारिघटीपार्श्वे ताड्यते पश्य झल्लरी ॥ २८८ ॥
जं चिअ विहिणा लिहिअं० ॥" २८९ ॥
कल्ये चौरं निरीक्ष्यात्रा–गतं प्रोक्तमिदं मया । त्वत्सङ्गत्या–हमीदृक्षा–मवस्थां दुःखदां गतः ॥ २९० ॥
निष्काशयाद्य मां मित्र ! सद्यः सङ्कटसंस्थितम् । यतो मित्रस्य नो मैत्री विघटेत कदाचन ॥ २९१॥ यतः—
पडिवन्नं दिणयरवासराण दोण्हंपि अखंडियं हवइ । सूरो न दिणेण विणा दिणो न सूरविरहम्मि ॥ २९२ ॥
उप्परि चंदा तलि कुसुम दूरट्ठिअ विहसंति । वाससहस्सेहिं नवि मिलइ नेहा नवि चुक्कंति ॥" २९३ ॥
चौरोऽवक् स्वशये वामे चन्द्रिका भूरिशोऽपतन् । तेनाधुना न शक्नोमि निष्कोष्टुं त्वां सुहृद्वर ! ॥ २९४ ॥
ततः प्रोक्ते मया मित्र ! मह्यं वितर भोजनम् । यावच्छयः क्रमात् सज्जी भवेदीदृक्षरोगतः ॥ २९५ ॥
ततो मह्यं त्रियामिन्या–मेत्यात्र ददतेऽदनम् । स्वस्थाने सन्ततं छन्नं तिष्ठति स्म दिनोदये ॥ २९६ ॥
मह्यं स्वस्थानकं नैव दर्शयामास तस्करः । दृश्यादृश्यनपूरूप–स्तिष्ठति स्म पुरान्तरे ॥ २९७ ॥

कुरुते सन्ततं स्तैन्यं महेभ्य-भूपसद्मसु । आयास्यत्यधुना स्तेन-स्तेन तिष्ठ रहः शनैः ॥२९८॥
अङ्गीकृत्य वचस्तस्य भट्टमात्रः स्थितो मुदा । चौरस्यानागतिं मत्वा पुनः प्राहेति तं प्रति ॥ २९९ ॥
किं नायात्यधुना तात-कीन मित्र वदोत्तम । हडिस्थः पुरुषः प्राह स चौरो लब्धलक्षकः ॥ ३०० ॥
द्वितीयं पुरुषं प्रेक्ष्य पश्चाद् यानि पुनः पुनः । परिष्यति स दुःखेन प्रपञ्चरचनाम्भनु ॥ ३०१ ॥
क्षिप्त्वा हड्या पद् तिष्ठा-ह तिष्ठामि रहः पुनः । यदेत्य भाजनं किञ्चित् तुभ्य दास्यति यो जनः ॥ ३०२ ॥
तदा त्वया करे ग्राह्यो दृढं मुष्ट्या स मानवः । नो चेत्कृत्वा छलं सद्योऽदृश्यरूपः प्रयास्यति ॥ ३०३ ॥ (युग्मम्)
भट्टमात्रो जगादित्थं ब्रूषते तस्करो यदि । धर्तुं चौरं तदा मां त्वं हड्या क्षिप सुहृद्वर ॥ ३०४ ॥
भट्टमात्रं दृढं हड्या क्षिप्त्वा स्थित्वा क्षणं रहः । पूर्ववद् गणिकावेश्म नेष्ठा चोरश्छली ययौ ॥ ३०५ ॥
भट्टमात्रस्ततः पश्यन् तस्यागममनारतम् । मातर्यान्ददतीवाभूद् दुःखितो दीनमानसः ॥ ३०६ ॥
भो भो नरोत्तमागच्छ मा च निष्काशयाधुना । एवं पुनः पुनः प्रोक्त्वा दध्यावेवं स धीसखः ॥ ३०७ ॥
तेनाहं वाहितो नूनं छलं कृत्वा दुरात्मना । अहं नृभ्य कथं मातर्दर्शयिष्ये मुखं स्वकम् ॥ ३०८ ॥
विचिन्त्येति स्ववस्त्रेण छादयित्वा शिरो निजम् । तस्थौ लज्जाकुलो भट्ट-मात्रो दूनाशयस्तदा ॥ ३०९ ॥
वस्त्रादिचिह्नतो मत्वा भट्टमात्रं जना जगुः । अस्येदक्ष फलं जातं साम्प्रतं निजकर्मतः ॥ ३१० ॥ यतः—

---

१. तदेतद् भवतात् मा ग ।

“ कृतकर्मक्षयो नास्ति कल्पकोटिशतैरपि । अवश्यमेव भोक्तव्यं कृतं कर्म शुभाशुभम् ॥ ३११ ॥
सचिवानां प्रधानानां प्रायेण निखिला जनाः । जल्पन्ति न शुभं कुत्र देशे काले कदाचन ॥ ३१२ ॥
नरपतिहितकर्त्ता द्वेष्यतां याति लोके, जनपदहितकर्त्ता त्यज्यते पार्थिवेन्द्रैः ।
इति महति विवादे वर्त्तमाने समाने, नृपतिजनपदानां दुर्लभः कार्यकर्त्ता ॥ ३१३ ॥”
भट्टमात्रं हडिक्षिप्तं श्रुत्वाऽमात्यो हराभिधः । गत्वा भूपान्तिके सद्यः प्राहेत्यरुणलोचनः ॥३१४॥
स्वामिन् ! प्रातः प्रणामोऽयं भवते क्रियते मया । तुल्यदण्डपरो जात–स्त्वं नीचानीचयोर्यतः ॥ ३१५ ॥
“ बब्बूल--चूतयोः काक--हंसयोः खर--हस्तिनोः । तुल्यत्वं क्रियते शिष्टा–शिष्टयोर्भवता किमु ॥ ३१६ ॥
आत्मीयाः सेवकाः किञ्चिद् अन्याय्यं कुर्वते यदि । गृहमध्ये तदा क्षिप्त्वा नोदना क्रियते भृशम् ॥ ३१७ ॥
राजा प्राह मया केषा-मपराधः कृतो वद । मन्त्री प्राह त्वया भट्ट-मात्रः क्षिप्तो हडौ कथम् ॥ ३१८ ॥
दुष्टं कुर्वन्त्यपत्यानि यदि किञ्चित् पितुर्मनाक् । तथापि हितवात्सल्यं कुरुते जनकः पुनः ॥ ३१९ ॥
श्रुत्वैतद् भूपतिस्तत्र गत्वा वीक्ष्य च मन्त्रिणम् । कर्षयामास हडितः प्रोवाचेति पुनस्तदा ॥ ३२० ॥
कुतो जातमिदं कष्टं भट्टमात्र ! तवाधुना । भट्टमात्रो जगौ स्वामिन् ! वक्तुं नैवेह शक्यते ॥ ३२१ ॥
भूपोऽवक् त्वं तथाऽप्यत्र जल्प तस्करचेष्टितम् । भट्टमात्रस्ततोऽशेषं नैशं वृत्तान्तमूचिवान् ॥ ३२२ ॥

---

१ भूपेत्युक्तो महीशेन भट्टमात्रस्तदा स्फुटम् । कथयामास निःशेषं नैशं वृत्तान्तमात्मनः ॥
अवस्थामीदृशं तेन तस्करेण तदा निशि भट्टमात्रस्त—ग.

स्मारं स्मारं तदा चौर-चेष्टितं रजनीकृतम्। भट्टमात्रो दधौ चित्ते विषादमात्मनो भृशम् ॥ ३२३ ॥ यतः—
"कालः समविषमकरः कालः सन्मानकारको लोके। कालः करोति पुरुषं दातारं याचितारं वा॥ ३२४॥
शशिनि खलु कलङ्कं० ॥ ३२५ ॥ शशि-दिवाकरयोः० ॥ ३२६ ॥
भूपः प्राह स कीदृशो विद्यते तस्करो वद। मन्त्र्यवग् मृष्टवाक् चारु-रूपदेहो लघुः स च ॥ ३२७ ॥
राजा जगौ भवन्त्येव-विधा धूर्ताश्च तस्कराः। वञ्चयन्तो जनान् नित्यं सुखकृज्जल्पनादिभिः ॥ ३२८॥ यतः —
"मुखं पद्मदलाकारं वाचा चन्दनशीतला०" ॥ ३२९ ॥
दुर्जनैरुच्यमानानि वचांसि मधुराण्यपि। अकालकुसुमानीव-सन्त्रासं जनयन्त्यलम् ॥ ३३० ॥
चोरा चुल्लका वीअ दुज्जण भट्टा य वेज्ज पाहुणया नच्चण-धुत्त-नरिंदा परस्स पीडं न याणंति ॥" ३३१॥
भट्टमात्राऽत्र भवतो दूषणं न मनागपि। दुःखाब्धौ यस्तलारक्षं पातयामास मामपि ॥ ३३२ ॥
त्वया सर्वप्रकारेण कुर्वता शासनं मम। कृतं कार्यं न तन्नात्र खेदः कार्यः स्वमानसे ॥ ३३३ ॥ यतः—
"आज्ञाभङ्गो नरेन्द्राणां वृत्तिच्छेदः सुधाभुजाम्। पृथक् शय्या च नारीणा-मशस्त्रो वध उच्यते ॥ ३३४ ॥
सती पत्युः प्रभोः पत्ति-र्गुरोः शिष्यः पितुः सुतः। आदेशे संशयं कुर्वन् खण्डयत्यात्मनो व्रतम् ॥" ३३५ ॥
आश्वास्येति लसद्वाक्यै-र्भट्टमात्रं महीपतिः। स्तेनवृत्तं स्मरन् चित्ते जग्मिवान् निजवेश्मनि ॥ ३३६ ॥
वेश्यासद्मस्थितोऽन्येद्युः स्तेनोऽप्राक्षीत्पणाङ्गनाम्। पुरीमध्येऽधुना का का वार्ता केषां प्रवर्तते ॥ ३३७ ॥

किं किं करोति भूपालः पुरीमध्येऽधुना पुनः । ततो ज्ञात्वा पुरीवार्त्तां वेश्या प्राहेति तत्र सा ॥ ३३८ ॥
आकार्य भट्टमात्रादीन् पप्रच्छेति प्रजापतिः । ग्रहीष्यते कथं चौरो भवद्भिः कथ्यतामिह ॥ ३३९ ॥
भट्टमात्रादयः प्रोचुः पुरीमध्ये मलीम्लुचः । कस्याश्रित्य गृहं स्तैन्यं कुरुते सन्ततं छली ॥३४०॥
पुरमेतन्महत् तेन वाद्यते पटहः स्फुटम् । यः कश्चित्पुरुषः स्त्री वा कर्षयति स्म तस्करम् ॥३४१॥
अष्टौ तस्याशुरैलक्षो--त्पत्तिकृन्नगराणि च । विश्राणयिष्यति क्ष्मापो--दानसन्मानतश्च नम् ॥३४२॥
वाद्यतामिति भूपोक्ते पटहो मन्त्रिभिस्तदा । वेदवसुप्रमाणेषु चतुर्हट्टेषु वाद्यते ॥३४३॥
पण्यस्त्रीपाटके वाद्य--मानं पटहमागतम् । चतस्रो गणिका मुख्याः श्रुत्वेत्येवं जगुर्मिथः ॥३४४॥
आत्मीयसदने लोका नित्यमायान्ति भूरिशः । तन्मध्यादेककं चौरं जल्पित्वेत्यर्पयिष्यते ॥३४५॥
समागते ततो भूप -प्रसादे स्वीयसद्मनि । वयं सर्वप्रकारेण सुखिन्यः स्मो धनादिभिः ॥३४६॥
विमृश्येति ततस्ताभिः संस्पृष्टे पटहे सति । नृपादिमन्त्रिणः सर्वे बभूवुर्मुदिताशयाः ॥३४७॥ यतः—
"समीहितेऽखिले कार्ये सिद्धिं याते सति स्फुटम् । मोदन्ते मनुजा रत्ना--करा इवोदिते विधौ ॥"३४८॥
आनीता मन्त्रिभिर्वेश्या जगुरेव नृपान्तिके । तस्करं कर्पयिष्यामोऽ--ष्टाहोमध्ये वयं न चेत् ॥३४९॥
चौरदण्डस्तदाऽस्माकं कर्त्तव्यो भूपते ! त्वया । श्रुत्वेति मन्त्रिणः प्रोचुर्धीमत्यो गणिका यतः ॥३५०॥

१. प्रोवाचेति ततो वेश्या स्तेनस्य पुरतस्तदा-ग. । २. नपूर्वकम्. ग । ३. विधायेत्यर्पे० ग. ।

अत्रावसरे वेश्या कथा ।

प्रतिज्ञामिति भूपाग्रे कृत्वा वेश्या निजालये । समेत्य कुरुते स्तेन-धरणोपायमन्वहम् ॥ ३५१ ॥
ततः स्वस्वगृहे लोका जगुरेव सुतान् प्रति । कुत्रापि नैव गन्तव्य-मुत्पुरे नीचवेश्मनि ॥ ३५२ ॥
वेश्याभि॰ पदह स्पृष्ट-स्तेन कर्षणहेतवे । कदाचित् ता नर कश्चित् छलाल्लात्वा नृपान्तिके ॥ ३५३ ॥
जल्पिष्यन्ति हाऽमु चौर तदा का वो गतिर्भवेत् । यत स्युर्गणिका नाना-कौटिल्यवञ्चनापराः ॥ ३५४ ॥ यतः—
"मनस्यन्यद् वचस्यन्यत् क्रियायामन्यदेव हि । यासां साधारणस्त्रीणा ता॰ कथं सुखहेतवे ॥" ३५५ ॥—
इत्यादिवेश्यासूक्तानि ज्ञातव्यानि ॥
पुरीमध्ये भवन्त्येवंविधा वार्त्ता॰ पदे पदे । छलछद्मपरा दुष्टा सन्ति याः पणयोषितः ॥ ३५६ ॥
कदाचित्ता[1] समीपस्था स्त्रा ज्ञास्यन्त्यत्र संस्थितम् । तदा भावी महानर्थो मम तव च निश्चितम् ॥ ३५७ ॥
चौर॰ प्राह न भेतव्य भवत्याऽत्र मनागपि । तथा बुद्ध्या करिष्यामि यथा स्यात्सुखमावयोः ॥ ३५८ ॥
कियन्तो वासरा जाता इत्युक्ते दस्युना तदा । वेश्या प्राहाष्टमो घस्रो भविष्यति प्रगे पुन॰ ॥ ३५९ ॥
तत॰ स्तेनो जगावद्य गमिष्यामि पुरान्तरे । यथा चैत्य त्रियामाया वादयिष्यामि झम्पकम् ॥ ३६० ॥
भवत्यैत्य तदा शीघ्र मुद्घाट्यो झम्पक शनैः । ओमित्युक्ते तया स्तेनो वणिग्वेषधरोऽचलत् ॥ ३६१ ॥
कस्मिंश्चिन्नगरे गत्वा क्रीत्वा गोणीश्च विंशतिम् । रङ्क्त्वा गोमयच्छारै--र्भृता वैक्रमदस्युना ॥ ३६२ ॥

---

[1] ऽन्यास्तीद् त्वत्सा कियद्दिनम् ।

केषाञ्चित्सविधे पुंसां गत्वा पप्रच्छ वैक्रमः । भाटकं कोऽपि कुर्वीत ते जगुः कुर्म्महे वयम् ॥ ३६३ ॥
दत्से त्वं किं किमेकस्याः गोण्याः प्राह वणिक् ततः । द्रम्मान् दश दशावन्त्यां गतो दास्याम्यहं पुनः ॥ ३६४ ॥
गोणीनां विंशतिं लात्वा भाटकेन वणिग्वरः । सार्थेशीभूय भूपाध्व--मध्येऽवन्त्यामगान्निशि ॥ ३६५ ॥
गोघंटामधुरध्वानं श्रुत्वेति मानवा जगुः । कोऽप्यपूर्वः समायातः सार्थेशो धनवान् पुरि ॥ ३६६ ॥
मुख्यवेश्यागृहोद्यानान्ते गोणीरुत्तार्य सार्थपः । गत्वा पानवणिग्गेहे मद्यकुम्भद्वयं ललौ ॥ ३६७ ॥
निश्चेष्टकाष्ठकृत्सार--स्वरकृच्चूर्णयोः पुटीम् । लात्वा वैद्यापणे सार्था--धिपतिश्चलितस्ततः ॥ ३६८ ॥
दौसिकाट्टे दुकूलानि सुन्दराण्यग्रहीत्पुनः । पुष्पलाविगृहे गत्वा सुपुष्पाण्याददे तदा ॥ ३६९ ॥
सार्थप्रेषितो वेश्या--गृहेऽभ्येत्य जगौ नरः । आगतोऽस्त्यत्र सार्थेशो ददन् दानमनर्गलम् ॥ ३७० ॥
भवन्त्यो यदि तस्याग्रे कुर्वन्तु नर्त्तनं वरम् । मधुरध्वनिगीतानि वितन्वन्तु च सम्प्रति ॥ ३७१ ॥
तदा दुकूलदीनार--मुख्यवस्तूनि भूरिशः । दास्यत्येव भवन्तीभ्यो नात्र कार्या विचारणा ॥ ३७२ ॥
प्रोचुर्मिथो रहो वेश्या गम्यते तत्र साम्प्रतम् । आदौ गृहीष्यते लक्ष्मीः पश्चादेवं करिष्यते ॥ ३७३ ॥
स्तैनेनस्त्वमिति दत्वाऽऽलं तं नेष्यामि नृपान्तिके । ग्रामा अष्टौ च तादृक्षा भविष्यन्त्यात्मनः पुनः ॥ ३७४ ॥

---

१. मलीम्लुचः ग । २. पटीम्. क. ग. । ३. ततो वेश्यागृहे गत्वा सार्थाधीशो जगावदः--ग । ४. दीनारदुकूलादीनि वस्तूनि. ग. । ५. तस्य चौरेति स्०-ग. ।

विमृश्येत्युदितं ताभिः पुरनारीभिरञ्जसा । सज्जीभूय समेष्यामो वय तत्र व्रजाधुना ॥ ३७५ ॥
वईयागमं नरात् तस्मा–ज्ज्ञात्वा दत्त्वा भृतिं नरान् । विसृज्य निखिलान् गोणी–रेकीकृत्य च तस्थिवान् ॥३७६॥
इतो वेश्या मदीपादि–सामग्रीं निखिला तदा । लात्वा तत्राययुर्नृत्य कर्तुं सार्थपसन्निधौ ॥ ३७७ ॥
पृष्ट ताभि' क्व सार्थेशो गतोऽन्येऽपि नरा ययुः । स प्राह ते गताः पुर्यां कार्यार्थमात्मन. पृथक् ॥ ३७८॥
अहमेवास्मि सार्थेशो भवतीभ्यो धन बहु । दास्येऽधुना च कुर्वन्तु नृत्यं मम पुरोऽनघम् ॥ ३७९ ॥
एकशो विहित नृत्य यावत्ताभिर्मनोहरम् । तावद् ददौ दुकूलानि तेभ्य सार्थपतिस्तदा ॥ ३८० ॥
हृष्टा. पण्याङ्गनाश्चारु–चमत्कृतिकर भृशम् । नृत्यं गीतादिभिश्चक्रु. सार्थनाथाग्रत पुनः ॥ ३८१ ॥
द्वितीयवार नृत्यान्ते सार्थाधीशो जगावदः । भवतीभ्योऽधुना मयं रोचते चेत्तदा ददे ॥ ३८२ ॥
ताभिरुक्त किमन्यद् नो मद्याद्वस्तु विलोक्यते । अस्मत्तुल्यनृणामेतद् विद्यतेऽभीष्टमेव हि ॥ ३८३ ॥
मधुरस्वानकृन्चूर्ण -मिश्रमद्यभृत घटम् । सार्थनाथो ददौ ताभ्यः पण्यस्त्रीभ्यो मनोहरम् ॥ ३८४ ॥
ततः पीत्वा सुरामाभि रतीव मधुरध्वनि । गीत कर्तुं समारब्ध कर्णसौख्यकर भृशम् ॥ ३८५ ॥
मधुरध्वनिमाकर्ण्य दृष्ट्वा नृत्य च सुन्दरम् । सार्थेशो ददते दान वस्त्रताम्बूलसयुतम् ॥ ३८६ ॥
दातार तादृशं सार्थ- नाथ वीक्ष्य पणाङ्गनाः । हृष्टाः सर्वोत्तम नृत्यं चक्रुस्तस्याग्रतस्तदा ॥ ३८७ ॥

१. आगत्य सार्थपो दत्त्वा भाटक भाटिकान् नरान्–ग ।

क्षणात्सार्थपतिः प्राह पुनर्मद्यं ददाम्यहम् । वेश्याः प्रोचुर्यथेच्छं नो रोचते मदिरेदृशी ॥ ३८८ ॥
निश्चेष्टकाष्ठकृच्चूर्ण–मिश्रितां मदिरां पुनः । पूर्ववत्पायितास्तेन--नृत्यन्त्यः पण्ययोषितः ॥३८९॥
ततः क्षणेन ताः सर्वाः मूर्छिताः पण्ययोषितः । निश्चेष्टकाष्ठवत्सुप्ता भूमीपीठे विचेतनाः ॥३९०॥ यतः—
"मदिरापानमात्रेण बुद्धि-र्नश्यति दूरतः । वैदग्धीबन्धुरस्यापि दौर्भाग्येणेव कामिनी ॥३९१॥
पापाः कादम्बरीपान--विवशीकृतचेतनाः । जननीं हा प्रियायन्ति जननीयन्ति च प्रियाम् ॥३९२॥
न जानाति परं स्वं वा मद्याच्चलितचेतनः । स्वामीयति वराकः स्वं स्वामिनं किंकरीयति ॥३९३॥
मद्यपस्य शवस्येव लुठितस्य चतुष्पथे । मूत्रयन्ति मुखे श्वानो व्यात्ते विवरशङ्कया ॥३९४॥
मद्यपानरसे मग्नो नग्नः स्वपिति चत्वरे। गूढं च स्वमभिप्रायं प्रकाशयति लीलया ॥३९५॥
वारुणी पानतो० ॥ भूतात्तवन्नरीनर्त्ति० ॥"–इत्यादि ॥३९६॥
तासां सर्वं ततो दिव्या-म्बराभरणसञ्चयम् । स्वार्पितं च धनं लात्वा नग्नीकृता विचेतनाः ॥३९७॥
शम्भोः कूपारघट्टस्थ–मालाभ्यो घटिकाः स च । उत्तार्य तास्ततो नग्ना बबन्धुः पुरनायिकाः ॥३९८॥
समानीयान्यतः स्थानाद् दधि सार्थपतिस्तदा । दत्त्वा तासां मुखे सौव-स्थानके पूर्ववद् ययौ ॥३९९॥
दर्शयित्वा च वेश्यायै सर्वमाभरणादिकम् । तदानयनवृत्तान्तं मूलतस्तस्करो जगौ ॥४००॥

१. नग्नीचक्रे च तेन ताः-ग । २- आनीय कस्यचित्स्थानात्. ग । ३. स्तेनो ददर्श वे०–ग । ४. मूलतश्चाखिलं. ।

वश्या दध्यावयं सत्य-स्तस्करः पश्यनोहर । यतोऽनेनाधुना बाढं वञ्चिता पणयोषित ॥४०१॥ यत.—
"अवश्यभाविनो भावा भवन्ति महतामपि । नग्नत्वं नीलकण्ठस्य महाहिशयन हरेः ॥४०२॥
शशि-दिवाकरयोर्ग्रहपीडन, गज भुजङ्ग-विहङ्गमबन्धनम् । मतिमता च समीक्ष्य दरिद्रता, विधिरहो बलवानिति मे मतिः॥४०३॥
इत स्नानकृते पूजा-करो गत्वा हरालये । कूपघाटक मात-श्चालयामास यत्नतः ॥४०४॥
अरघट्ट स्थिर मत्वा पश्चाद् यावद्विलोकने ।। शम्भो कूपघटीस्थान वीक्ष्य दध्याविद हृदि॥४०५॥
किं शाकिन्योऽथवा दुष्ट-पिशाचिन्योऽथ शक्तयः । शीकोतर्योऽथवा मार्यो व्यन्तर्यो राक्षसाङ्गनाः ॥४०६॥
विकरालाकृतिं तासा दृष्ट्वा विस्मयवेदवमहद् । कम्पमानो नृपोपान्ते गत्वा सद्यो जगावदः ॥ ४०७॥
शम्भो. कूपघटीस्थान साम्प्रत शक्तिभिर्भृतम् । तेन तत्रेत्य भूपाल ! कार्यता शान्तिका क्रियाः ॥४०८॥
नो चेद् दुष्टाशयाः सर्वा उत्थिताः शक्तयः पुन । करिष्यन्ति हि लोकाना पुरेऽनर्थं महत्तमम् ॥४०९॥ यत—
"अनागतविधाता च प्रत्युत्पन्नमतिश्च यः । द्वावेतौ सुखमेधेते यद्भविष्यो विनश्यति ॥" ४१०॥
अत्रानागतविधातृ-प्रत्युत्पन्न(मति-यद्)भविष्यमित्रत्रयदृष्टान्तो वाच्य ॥
श्रुत्वैतच्चकितो राजा गत्वा यावन्निरीक्षते । तावन्मृगेक्षणा नग्ना दृष्ट्वाऽजनि पराङ्मुखः ॥ ४११ ॥
"परनारीर्निरीक्ष्याशु सन्तः सद्य पराङ्मुखा । जायन्ते वर्षतोऽम्भोदादिव वृषभपुङ्गवाः ॥ ४१२ ॥
दट्टूण परकलत्तं० ॥" ४१३ ॥

प्रोचुर्मन्त्रीश्वराः क्ष्माप ! नामूः स्युः शक्तयः खलु । किन्तु याभिः कृता पूर्वं प्रतिज्ञा भवदन्तिके ॥ ४१४ ॥
ता एव गणिका नूनं संभाव्यन्तेऽत्र संप्रति । केनचिच्छलिना बद्धा अमूः कूपारघट्टके ॥ ४१५ ॥
प्रोचुश्च मन्त्रिणस्तेन स्तेनेनेदं कृतं ननु । तत उत्तारयामास सेवकैस्ता महीपतिः ॥ ४१६ ॥
शर्करामिश्रितं दुग्धं पाययित्वा च तास्तदा । सचेतनीकृता भूमी– भुजा च परिधापिताः ॥ ४१७ ॥
राज्ञा पृष्टं कृतं केने–दमित्युक्ते पणाङ्गनाः । निःशेषनैशवृत्तान्तं मूलतश्च जगुस्तदा ॥ ४१८ ॥
श्रुत्वैतद् भूपतिः प्राह सैष स्तेनश्छली भृशम् । कृत्वेदं निखिलं सद्यः प्रययौ कुत्रचिन्निशि ॥ ४१९ ॥
भवतीभिश्च भेतव्यं मत्तो नैव मनागपि । इत्युक्त्वा भूपतिः सोऽथ मन्दिरं समुपेयिवान् ॥ ४२० ॥
अन्येऽपि मन्त्रिणो वेश्या–दयो लोकाश्च भूरिशः । ध्यायन्तो वृत्तमाश्चर्य–कृत् तस्य स्वगृहं ययुः ॥४२१॥ वेश्यापराभवाधिकारः ॥
अन्येद्युर्गणिकौकःस्थः स्तेनो–ऽप्राक्षीत पणाङ्गनाम् । पुरीमध्येऽधुना का का वार्त्ता केषां प्रवर्त्तते ॥ ४२२ ॥
किं करोति महीपालः भट्टमात्रादिसंयुतः । प्रोवाच गणिका तत्र स्तेनस्य पुरतो रहः ॥ ४२३ ॥
आकार्य भट्टमात्रादीन् पप्रच्छेति महीपतिः । विगोपिता भृशं पण्य–भामिन्यस्तेन दस्युना ॥ ४२४ ॥
ग्रहीष्यते कथं चौरो–ऽधुनेदृक्षपराक्रमः । भट्टमात्रादयो मन्त्री–श्वरा भूपाग्रतो जगुः ॥ ४२५ ॥
पुरीमध्येऽधुना कस्य गृहमाश्रित्य सन्ततम् । कुरुते तस्करः स्तैन्यं नानारूपधराङ्गकः ॥ ४२६ ॥
श्रुत्वैतत्कोठिको द्यूत–कारकः प्रोक्तवानिदम् । स्वामिन् ! अत्र ममादेशं देहि चौरस्य कर्षणे ॥ ४२७ ॥

स्वामिन् सर्वेऽपि सुभटा -स्तिष्ठन्तु स्थानके निजे। त्वदादेशादहं स्तेनं कर्षयिष्यामि हेलया ॥ ४२८ ॥
नृप' प्रोवाच मैवं त्वं वद सम्प्रति कोटिक ! । यतश्चौरोऽस्ति दुर्ग्राह्यो देवानां बलिनामपि ॥ ४२९॥
कोटिकोऽवक् तव स्वामिन् ! घनकुत्सेवकोऽस्म्यहम् । त्वत्प्रसत्ते स्यात्स्तेनो वश्यो मम भविष्यति ॥ ४३० ॥ यतः—
" राजानमेव संत्यज्य विद्वान् याति परोन्नतिम् । विना मलयमन्यत्र चन्दनं किं निवर्धते ॥ ४३१ ॥
धवला-ातपत्राणि वाजिनश्च मनोरमाः । सदा मत्ताश्च मातङ्गा' प्रसन्ने भूपतौ सति ॥ " ४३२ ॥
नो हि चेन्मस्तकं मुण्डी-कृत्वा मम खरोपरि । मा चारोप्य पुरीमध्ये भ्रामितव्य स्वसेवकैः ॥ ४३३ ॥
एवमस्त्विति भूपोक्ते कोटिको नूतकृत् तदा । कियत्सुभटसयुक्तो -ऽचालीत् धर्तुं च तस्करम् ॥ ४३४ ॥
श्रुत्वैतत्तस्कर माह गमिष्यामि पुरान्तरे । यदैत्याह त्रियामिन्यां वादयिष्यामि झम्पकम् । ॥ ४३५ ॥
भवत्याऽऽशु तदा गत्यो कृपाट्यश्च फलकः शनैः । प्राप्ताप्राप्तधनाश्चौराः समेष्यन्ति यतो निशि ॥ ४३६ ॥
मिलित्वा सकटं पूत-कृतस्तस्याहमञ्जसा । लात्वा किमप्यभिज्ञान-मेष्याम्यत्र निकेतने ॥ ४३७ ॥
वेश्या जगौ यदैत्य त्वं झम्पकं वादयिष्यसि । करिष्येऽहं त्वदुक्तं तत् सर्वं स्तेनावतंसक ! ॥ ४३८ ॥
ततो मलिम्लुचो हृष्ट-चित्तो वेश्यानिकेतनात् । निस्ससार गताशङ्को द्रष्टुकामश्च कोटिकम् ॥ ४३९ ॥
भ्रमताऽदृश्यरूपेण स्तेनेन निखिले पुरे । चतुष्पथे स्थिते सम्यक् कोटिको ह्युपलक्षितः ॥ ४४०

१ पग गति-ग. । २. मुण्डीकृत्येत्यर्थ । ३ सत्रस्मिन् पुस्तके क्वचित् 'कोडिक' 'कौटिक कोटिक' इत्यनेकधा पाठ ॥

कृत्वा स्फारजटां लिङ्गि–रूपभृत् तस्करो निशि । सरःपालिस्थचण्डाया एत्य सद्मन्युपाविशत् ॥ ४४१ ॥
इतोऽभितः पुरीमध्ये कोटिको द्यूनकृद् भ्रमन् । नत्वाऽग्रग् लिङ्गिनं प्रेक्ष्यो--पविष्टं चण्डिकाऽऽलये ॥ ४४२ ॥
योगिन् ! कथं प्रलम्बाऽभूत् जटा नव मनोहरा । मुष्णतश्च पुरीं दस्यो--र्ज्ञायते स्थानकं कथम् ॥ ४४३ ॥ यतः—
" रोगिणां सुहृदो वैद्याः प्रभूणां चाटुकारिणः । मुनयो दुःखदग्धानां गणकाः क्षीणसम्पदाम् ॥"४४४॥
लिङ्गी प्रोवाच भो भद्र ! भद्रीकृत्वा शिरो यदि । चूर्णेनानेन लिम्पित्वा त्वं कुरुष्वेति सम्मति ॥ ४४५ ॥
मन्त्रो मदर्पितो वारि–मध्ये आकण्ठसंस्थितैः । अहर्घटीद्वयं यावत् भवद्भिर्जप्यते भृशम् ॥ ४४६ ॥
अहमत्र स्थितो ध्यानं करोमि विधिवत्तथा । यथा तत्र [1]स्थितस्त्वं हि वेत्सि चौरस्थितिं द्रुतम् ॥ ४४७ ॥
मज्जटावत् प्रलम्बाऽऽशु वेणी च तावकाऽखिला । भविष्यति न संदेह- श्चटितेऽह्नोर्घटिकाद्वये ॥ ४४८ ॥
योगिनोक्त ततः सर्वं कृत्वा कोटिकद्यूतकृत् । स्वसेवकयुतो वारि- मध्ये तस्थौ समाहितः ॥ ४४९ ॥
इतश्च कोटिकद्यून--कृद्भटानां मलिम्लुचः । गृहीत्वा वस्त्र--खड्गाद्य--चालीत् स्वस्थानकं प्रति ॥ ४५० ॥
चलन्मलिम्लुचो लिङ्गि--रूपं संहृत्य पूर्ववत् । गत्वा वेश्यालये नैशं स्ववृत्तमूचिवान् निशि ॥ ४५१ ॥
वेश्या प्राह भवान् सत्य--स्तस्करोऽस्यधुना स्फुटम् । कोटिकोऽपि त्वया क्षिप्तः सङ्कटे विकटे यतः ॥ ४५२ ॥
प्राननीरार्थमायान्त्यस्तत्र पानीयहारिकाः । दृष्ट्वा कौटिकं प्रोचुः किमेषः कोटिको ननु ॥२५३ ॥

१. स्थिता यूयं वित्थ चौ०–ग ।

प्रतिज्ञा विहिता तेन कर्षितु तस्करं खलु । अतस्तेनाप्यसौ दुस्था मीदृशां प्रापितोऽधुना ॥ ४५४ ॥
अनेन वञ्चिता लोका बहवश्छलितोऽत्र यत् । इह तत्पापमायात परत्र किं भविष्यति ॥ ४५५ ॥
इतः प्रातर्मनुष्यारयात् नादर्शी कोटिकापदम् । निशम्य मन्त्रिणो भूप पार्श्वेऽभ्येत्य जगुस्तदा ॥ ४५६ ॥
स्वामिंस्तस्या प्रतिज्ञाया- स्तिष्ठते दिवसद्वयम् । त्वयाऽद्यापि कथं तस्य दण्डश्च कारितो द्रुतम् ॥ ४५७ ॥
" सकृज्जल्पन्ति राजान सकृज्जल्पन्ति साधव. । सकृत्कन्याः प्रदीयन्ते त्रीण्येतानि सकृत सकृत् ॥ ४५८ ॥
अलसंतेण त्रिसज्जणेज जे अक्खरा समुल्लविआ । ते पत्थरटकुक्कीरिअव्व न हु अन्नहा हुंति ॥ ४५९ ॥

अद्यापि नोज्झति हर' किल कालकूट कूर्मो बिभर्ति धरणीमपि पृष्ठकेन ।
अम्भोनिधिर्वहति दुर्वहवाडवाग्नि -मङ्गीकृतं सुकृतिन' परिपालयन्ति ॥" ४६० ॥

राजा प्राह मया तस्य कोटिकस्याक्षदीविनः । दण्डो न कारित. शीघ्रं भद्रीकारादिनाऽधुना ॥ ४६१ ॥
ततश्च मन्त्रिणः प्रोचुः स्वामिंस्तत्रैत्य सम्प्रति । सम्यग्विलोकयता तस्या-वस्थां जातामनीदृशीम् ॥ ४६२ ॥
ततस्तत्रैत्य भूपाल -स्तान् दृष्ट्वेति जगौ तदा । निस्सरताम्युतो यूय प्रतिज्ञा पूरिता च वः ॥ ४६३ ॥
कौटिकोऽवग् महीपाल ! स्थीयता क्षणमेककम् । ज्ञात्वा चौरस्थितिं सम्यक् कथयिष्याम्यहं तत्र ॥ ४६४ ॥

---

१ इतश्च प्रातर्मनुष्यात् क. ख. । २ अलसयता धिसजनेन येऽक्षरा समुल्लपिता । ते प्रस्तरटङ्कोत्कीरिता इव नैवान्यथा भवन्ति ॥

एवं पुनः पुनः प्रोक्त्वा चटितेऽह्नो घटीद्वये । अज्ञातस्तेनवृत्तान्तः कौटिको निःसृतो जलात् ॥ ४६५ ॥
राजा पप्रच्छ केनेदं भवतो विहितं वद । कौटिकोऽवक् कृतं रात्रौ लिङ्गिना चण्डिकाऽऽलये ॥ ४६६ ॥
ततश्चण्डीगृहे गत्वा भूपोऽप्रेक्ष्य च लिङ्गिनम् । प्राहेति वाजिनो रात्रौ तेन स्तेनेन निश्चितम् ॥ ४६७ ॥
कर्तव्यं भवता दुःखं न मनाग् हृदि सम्प्रति । येनाप्यस्मादृशाः कष्टे पातितास्तत्र को भवान् ॥ ४६८ ॥
ततो न भवतः किंचित् दूषणं विद्यतेऽधुना । यतो न कर्मतो देवैश्छुट्यते कुत्रचिन्मनाक् ॥ ४६९ ॥ यतः—
"स्थानं त्रिकूटः परिखा समुद्रो, रक्षांसि योधा धनदाश्च वित्तम् । सञ्जीवनी यस्य मुखे च विद्या, स रावणः कालवशाद् विपन्नः ॥४७०॥
कर्मणोऽपि प्रधानत्वं किं कुर्वन्ति शुभा ग्रहाः । वसिष्ठदत्तलग्नोऽपि रामः प्रव्रजितो वने ॥ ४७१ ॥
तित्थयरा गणहारी० ॥" ४७२ ॥
ततो मन्त्रीश्वराः प्रोचुः स एव तस्करश्छली । कृत्वेदं भवतः सर्वं प्रययौ कुत्रचिन्निशि ॥ ४७३ ॥
भवता कौटिकेदानीं मत्तः कार्यं भयं नहि । इत्युक्त्वा भूपतिः सौधमन्दिरं समुपेयिवान् ॥ ४७४ ॥
अन्येऽपि मन्त्रिणो भट्ट--मात्राद्या निखिलास्तदा । ध्यायन्तो मानसे स्तेन-वृत्तं स्वं स्वं गृहं ययुः ॥ ४७५ ॥
वेश्यासद्मस्थितोऽन्येद्युः स्तेनोऽप्राक्षीत्पणाङ्गनाम् । पुरीमध्येऽधुना का का वार्त्ता केषां प्रवर्तते ॥ ४७६ ॥
किं करोति महीपालः कुर्वन्ति मन्त्रिणश्च किम् । प्रोवाचेति ततो वेश्या स्तेनस्य पुरतो रहः ॥ ४७७ ॥
आकार्य मेदिनीनाथः सचिवानेवमूचिवान् । कर्पयिष्याम्यहं स्तेनं वासरत्रयमध्यतः ॥ ४७८ ॥

अवसरं विना नेतो नि सर्तुं लभते कनी । दध्यौ च मेऽधुना पूर्वं कुष्ठकर्मं समागमत् ॥ ३२० ॥
सकलस्थानके नूनमागतः स भविष्यति । तेन कृत्वा छलं किंचित् निःसरिष्याम्यहं शनैः ॥ ३२१ ॥
विचिन्त्येति महीपाल-पुत्री प्राह सखीं प्रति । ममास्ति साम्प्रतं देह-चिन्ता तेन व्रजाम्यहम् ॥ ३२२ ॥
सखी प्राहागतो राज-द्वारे धर्मध्वजो वरः । तवाभवद् वपुश्चिन्ता गतिः काऽत्र भविष्यति ॥ ३२३ ॥
प्राह शुभमती देह-चिन्ताया कोऽपि मानवः । चक्री वा वासुदेवो वा न क्षणं क्षमते मनाक् ॥ ३२४ ॥ यतः—
"तिन्नि सल्ला महाराय ! अत्थि देहे पइट्ठिया । वाउ-मुत्त-पुरिसाणं खणमित्तं न धारए ॥ ३२५ ॥ अत्र कथा साधोः ।
"कण्हो नराण वक्किमो कण्हस्स य तुगिणी वलिआ । भणइ उइहरत्ते निस्सर किं निस्सरिस्सामि ॥ ३२६ ॥ अत्रापि कृष्णकथा ।
इत्यादि युक्तिं पर्यं वस्याप्य स्वां सखीं तदा । निस्ससार गृहाद् यावद् बहिः शुभमती कनी ॥ ३२७ ॥
इतस्तावत्समायातः पूर्वं विक्रमनन्दनः । निरीक्ष्य जात-मुत्सूर नृपपुत्रीमनागताम् ॥ ३२८ ॥
आकुलव्याकुलस्वान्तो विलोकयन्नितस्ततः । पुरुषं कमपि प्रेक्ष्य तत्रायातं जगावदः ॥ ३२९ ॥
यावद् वर-विलोक्याप्त पश्चादेष्याम्यहं द्रुतम् । तावत्त्वमश्ववस्त्रादि गृहाण निखिलं मम ॥ ३३० ॥
तेनोमित्युदिते भूप-पुत्रस्तद्वेषभूषितः । कन्यार्थं त्वरितं भूप-मध्येगेहं ययौ तदा ॥ ३३१ ॥ यतः—
"दिवा पश्यन्ति नो घूकाः काको नक्तं न पश्यति । अपूर्वः कोऽपि कामान्धो दिवा नक्तं न पश्यति ॥ ३३२ ॥

कृत्याकृत्ये न जानन्ति न जानन्ति हिताहिते । कामान्धा मानवा जग्ध-धत्तूरबीजका इव " ॥ ३३३ ॥
इतस्तत्रेत्य भूपाल-पुत्री प्राहेति तं नरम् । हे कुमाराधुनोत्सूरो—ऽजनि कार्यवशान्मम ॥ ३३४ ॥
अहमत्रागताऽद्य त्वां परिणेतुं नृपाङ्गजा । तेन व्रज निजं स्थानं प्रति त्वं भूपनन्दन ॥ ३३५ ॥
श्रुत्वैतद् कर्षको दध्या-विय-मागान्नृपाङ्गजा । संकेतिता नरेणेति केनचिद् नात्र संशयः ॥ ३३६ ॥
ध्यात्वेति मौनमाधाय तामादाय च तत्क्षणात् । सिंहारूढः कर्षकः सोऽत्र--स्थानं प्रत्यचलत् तदा ॥ ३३७ ॥
दृष्टा कन्याऽध्वनि प्राह भो कान्त ! भवतः पुरम् । कियन्मार्गे समस्तीति मदग्रे कथयाधुना ॥३३८ ॥
कथाभिरथवा पूर्व-भूताभिः साम्प्रतं चलन् । मम कर्णौ कुरु स्वामिन् ! पवित्रौ वर्त्मनि ध्रुवम् ॥ ३३९ ॥
एवं पुनः पुनः प्रोक्ते यावज्जजल्प नो हली । तावद् भूपाङ्गजा दध्यौ लज्जमानो न वक्त्ययम् ॥ ३४० ॥
उत्तमा मानवा नैव जल्पन्ति स्म यथा तथा । समुत्पन्ने महाकार्ये जल्पन्ति स्तोकमेव हि ॥ ३४१ ॥ यतः—
"यौवनेऽपि प्रशान्ता ये ये हृष्यन्ति याचिताः । वर्णिता ये च लज्जन्ते ते नरा जगदुत्तमाः ॥ ३४२ ॥
गर्जति शरदि न वर्षति वर्षति वर्षासु निःस्वनो मेघः । नीचो वदति न कुरुते न वदति साधुः करोत्येव " ॥ ३४३॥
अथ भानूदये तस्य वक्त्रं वीक्ष्य नृपाङ्गजा । मूर्छिता पृथिवीपीठे-ऽपतच्छिन्नचेष्टकाष्ठवत् ॥ ३४४ ॥
शीतोपचारतः स्वस्थी-भूता भूपालनन्दिनी । दध्याविति क्व सो दिव्यरूपधारी नरः कुतः ॥ ३४५ ॥
अयं कुत्सितरूपश्री-रागतोऽसि कुतो नरः । आनीतो वा मदीयेन भाग्येन ननु सम्प्रति ॥ ३४६ ॥

इतः सिंहो हली प्राह त्यक्तमौनावलम्बकः । भो भामिनि ! कथं शोको हर्षस्थाने विधीयते ॥ ३४७ ॥
ग्रामे विद्यापुरे भूरि–कर्षकादिजनाकुले । द्यूतक्रीडादि कुर्वन्ति यत्र लोका निजेच्छया ॥ ३४८ ॥
तत्राहं कर्षकः सिंहो वसामि द्यूततत्परः । सप्तव्यसनकल्लोल–सहितः सतत मुदा ॥ ३४९ ॥
बीजमुप्तं ममेदानीं पराजितेषु पञ्चसु । चत्वारो वृषभाः सन्ति सवन्येको रथोऽनघ ॥ ३५० ॥
द्वे गावौ रासभी चैका नयते सलिलं गृहम् । गेहं तृणमयं छिद्र–रिक्तं निर्वातमस्ति मे ॥ ३५१ ॥
विद्यते गृहिणी पूर्वमेका त्वं द्वितीया पुनः । स्थापयित्वा नवीना त्वां जीर्णा निष्काश्यते मया ॥ ३५२ ॥
सदनस्वामिनीं कृत्वा त्वामहं स्यां भृशं सुखी । यत एवंविधो योगो लभ्यते भाग्यतो नरैः ॥ ३५३ ॥ यतः—
" एका भार्या त्रयः पुत्रा द्वे हले दश धेनवः । ग्रामे वासः पुरासन्ने स्वर्गादपि विशिष्यते ॥ ३५४ ॥
तरुणं सर्षपशाकं नवौदनं पिच्छिलानि च दधीनि । अल्पव्ययेन सुन्दरि ! ग्राम्यजनो मिष्टमश्नाति" ॥ ३५५ ॥
श्रुत्वैतद् कन्यका दध्यौ पतिताऽहं च संकटे । बुद्धिं विना न निष्कासितुं शक्यते मयका मनाक् ॥ ३५६ ॥ यतः—
"यस्य बुद्धिर्बलं तस्य निर्बुद्धेस्तु कुतो बलम् । वने सिंहो मदोन्मत्तः शशकेन निपातितः ॥ ३५७ ॥ इत्यादि बुद्धिसूक्तानि ।
स्यात्स्वेति कन्यका प्राह जल्पितं भवता वरम् । परमेकं महाविघ्नं विद्यते दुःखदं तव ॥ ३५८ ॥
यदि त्वं दिव्यरूपां मां मनसीकृत्य नेष्यसि । ग्राममध्ये तदा राजा मद्रूपश्रीविमोहितः ॥ ३५९ ॥
हत्वा त्वां सपदि स्वीय–गेहे मां क्षेप्स्यति क्षणात् । तेन मुक्त्वा निजे क्षेत्रे मां गच्छ निजसद्मनि ॥ ३६० ॥

क्षेत्रे विवाहसामग्रीं सर्वामानीय तत्क्षणात् । परिणीय च मां कन्यां ततः सौवगृहे नय ॥ ३६१ ॥
एवं कृते तु भवतः कुशलं हि भविष्यति । श्रुत्वैतत् कर्षकोऽनैषीत् स्वक्षेत्रं तां प्रमोदितः ॥ ३६२ ॥
एवं वदन् हली तस्यै क्षेत्रं दर्शयति स्वकम् । इदं युगंधरीक्षेत्रं जगज्जीवनकृत्पुनः ॥ ३६३ ॥
इदं च वनकक्षेत्रं सर्ववस्त्रविधायकम् । इदं च चणकक्षेत्रं तुष्टिकृत् सततं नृणाम् ॥ ३६४ ॥
इत्यादि बहुशः प्रोक्त्वा दिव्याश्ववसनान्विताम् । मुक्त्वा तां कन्यकां क्षेत्रे जीर्णवस्त्रोऽचलद्धली ॥ ३६५ ॥
गत्वा गेहे स्वतं भार्यां प्रति प्राह कृषीवलः । रे रे त्वयाऽमुकं कार्यं कृतं नवेति हक्कयन् ॥ ३६६ ॥
त्वया विनाशितं सर्वं गेहं सम्प्रति मामकम् । परिणेतुं मयाऽऽनीता नवीना कन्यकाऽद्भुता ॥ ३६७ ॥
एवं कर्कशभाषाभिः संतर्ज्य तेन भूरिशः । निष्काशिता पितुर्गेहे ययौ पूर्वप्रिया तदा ॥ ३६८ ॥
आकार्यैकं द्विजं सर्वविवाहसामग्रिकान्वितम् । परिणेतुं च तां कन्यां निस्ससार हली गृहात् ॥ ३६९ ॥
इतः स्वशीलरक्षार्थं–मश्वरूढा नृपाङ्गना । प्राणांस्त्यक्तुं चचालाशु गिरिनारगिरिं प्रति ॥ ३७० ॥
दध्यौ यदि पितुर्गेहे गमिष्याम्यहकं पुनः । तदा तत्र कथं कार्य--मुत्तरो मयका स्फुटम् ॥ ३७१ ॥
द्वयोरपि तदा भर्त्रोश्च्युकिता दैवयोगतः । आपदायामहं पूर्वं पतिताऽस्मि करोमि किम् ॥ ३७२ ॥
एवं चिन्तापरा राज---पुत्री शुभमती तदा । न सुप्ता न जजागार नैवोत्तस्थौ मनागपि ॥ ३७३ ॥ यतः—
"चिन्तातुरस्य दुःस्थस्य पतितस्यापदि स्फुटम् । रोगग्रस्तस्य मर्त्यस्य निद्रा नायाति कर्हिचित् ॥ ३७४ ॥

तस्मिन् वृक्षे स्थितो रात्रौ भारण्डः स्थविरो बयाः । अपत्यानि चतुर्दिक्षा–गतानीति जगौ तदा ॥ ३७५ ॥
कन कुत्र किमाश्चर्यं श्रुतं दृष्टं प्रजल्प(ल्प्य)ताम् । तत एको जगौ ताता-गमं वलभ्या बहिर्वने॥३७६॥(गतोऽहं वलभीं भ्रमन्)
कोलाहलं पुरीमध्ये निशम्याहं विलोकितुम् । आगां यावज्जनास्तावदेवं प्रोचुः परस्परम् ॥ ३७७ ॥
धर्मध्वजो वरो भूमिपतेः शुभमतीं सुताम् । परिणेतुं गृहे यावदागमत् समहोत्सवम् ॥ ३७८ ॥
तावत् कोऽपि नरो भूमी(प)पुत्रीं हृत्वा रहो ययौ । विलोकिताऽपि सर्वत्र लब्धा नैव महीभुजा ॥ ३७९ ॥
ततो बभूवतुः कन्यापितरौ दुःखितौ भृशम् । वरोऽपि लज्जितः प्राणास्त्यक्तुकामोऽभवत् पुनः ॥ ३८० ॥
ततः स्वस्थीकृताः सर्वे इति मन्त्रीश्वरैर्जगुः । मासमध्ये शुभमती लभ्यते यदि नैव चेत् ॥ ३८१ ॥
तदाऽनशनतोऽस्माभिर्मर्तव्य रैवताचले । ततो दिशो दिशं कन्यां ययुर्द्रष्टुं च सेवकाः ॥ ३८२ ॥ [ युग्मम् ]
अद्यापि कन्यका नैव लब्धा कैश्चिच्च सेवकैः । तेन सर्वे चलिष्यन्ति परेद्यू रैवत प्रति ॥ ३८३ ॥
भारण्डोऽवग् महाश्चर्यं द्रष्टु (दृष्टं) पुत्र त्वया स्फुटम् । द्वितीयस्तनयः प्राह-स्येवं तातपुरस्तदा ॥ ३८४ ॥
मया च वामनस्थल्या गतेनेदं निरीक्षितम् । कुम्भभूमिपतेः कन्या रूपश्रीर्नामतोऽभवत् ॥ ३८५ ॥
अन्धीभूता कनी कर्म-योगतः काष्ठभक्षणम् । राजानं याचमानाऽपि स्थापिताऽष्टौ दिनानि सा ॥ ३८६ ॥
प्रतीकारार्थमानीता अनेके कुशला नराः । परं तस्या मनाग् नैव गुणो जातोऽस्ति चक्षुषोः ॥ ३८७ ॥
ततो विचार्य भूपेन वाद्यते पटहोऽधुना । यः कश्चित् कुरुते कन्यां पश्यन्तीं च यथा तथा ॥ ३८८ ॥

तस्मै ददाति भूपालो नराय मुखमार्गितम् । तात तत् तत्र नगरे श्रुतं दृष्टं मयाऽपि हि ॥ ३८९ ॥
भारण्डः स्थविरो प्राह साऽपि भूमीशनन्दिनी । पश्यन्ती च भवत्येव स्वौषधादिप्रयोगतः ॥ ३९० ॥
पुत्रः प्राहौषधं किं तत् तेन सा नृपनन्दिनी । दिव्यदृष्टिर्भवत्येव तात तत् कथयाऽधुना ॥ ३९१ ॥
भारण्डोऽवग् मलोत्सर्गं मदीयं घृष्यते यदि । श्रीमद्गजेन्द्रकुण्डस्य वारिणाऽमावसीदिने ॥ ३९२ ॥
तद्रसेन महीपालपुत्र्या अञ्ज्येत लोचने । तदा सा दिवसे तारा–मण्डलं वीक्षतेऽखिलम् ॥ ३९३ ॥
एतच्चूर्णं सुधावल्लीरसेन मिश्रितं यदि । क्षिप्यते नेत्रयो रूप–परावृत्तिः प्रजायते ॥ ३९४ ॥
एतच्चूर्णं यदा चन्द्रवल्लीरसविमिश्रितम् । क्षिप्यते नेत्रयोः पूर्व–रूपमेव भवेत्तदा ॥ ३९५ ॥ यतः—
" अमन्त्रमक्षरं नास्ति नास्ति मूलमनौषधम् । अनाथा पृथिवी नास्ति आम्नायाः खलु दुर्लभाः" ॥ ३९६ ॥
तृतीयस्तनयः प्राह ग्रामे विद्यापुराभिधे । सिंहाह्वो हालिकः क्षेत्रे कन्यामेकां समानयत् ॥ ३९७ ॥
क्षेत्रे विमुच्य तां कन्यां परिणेतुं च हालिकः । ययावुद्वाहसामग्रीं लातुं निजगेहे द्रुतम् ॥ ३९८ ॥
गत्वा गृहे द्रुतं भार्यां प्रति प्राह कृषीवलः । रे रे त्वयाऽमुकं कार्यं न कृतमित्यहवकयत् ॥ ३९९ ॥
त्वया विनाशितं सर्व–गृहं सम्प्रति मामकम् । परिणेतुं मयाऽनीता नवीना कन्यकाऽद्भुता ॥ ४०० ॥
एवं कर्कशभाषाभिः सन्तर्ज्य तेन भूरिशः । निष्काशिता पितुर्गेहे रुष्टा पूर्वप्रिया ययौ ॥ ४०१ ॥
आकार्यैकं द्विजं सर्वो-द्वाहसामग्रियुतकाः । परिणेतुं च तां कन्यां निःससार हली गृहात् ॥ ४०२ ॥

क्षेत्रमध्ये महीपाल-पुत्रीमप्रेक्ष्य हालिकः । बभ्राम परितः स्थाने स्थाने शून्यमनास्तदा ॥ ४०३ ॥
ततोऽपश्यन् हली कन्यां शून्यचित्तो जगावद । भो ! विप्रेयं मया कन्याऽऽनीतोद्वाहकृतेऽधुना ॥ ४०४ ॥
कारय त्वं मया सार्ध-मनया पाणिपीडनम् । मुक्त्वाऽहं सदनं शून्य-मत्रागाम गम्यते मत' ॥ ४०५ ॥
शून्ये गृहे यतो लोकाः प्रविश्य हरते धनम् । एवं जल्पन् द्विज क्षेत्रे भ्रामयामास सर्वतः ॥ ४०६ ॥ यतः—
"दिवा पश्यन्ति नो घूकाः काको नक्तं न पश्यति० ॥ ४०७ ॥
दृश्य वस्तु परं न पश्यति जगत्यन्धः पुरोऽवस्थितम्, रागान्धस्तु यदस्ति तत्परिहरन् यन्नास्ति तत्पश्यति ।
कुन्दे-न्दीवर-पूर्णचन्द्र-कलश श्रीमल्लतापल्लवा-नारोप्याशुचिराशिषु प्रियतमागात्रेषु यन्मोदते" ॥ ४०८ ॥
प्रथिकोऽयमिति कृत्वा जगाम वाडवो गृहम् । भ्रान्त्वा क्षेत्रे हली पूर्व-भार्यापार्श्वे समागमत् ॥ ४०९ ॥
मोचानेति प्रिये ! गेहं त्वमागच्छात्मनोऽधुना । श्रुत्वैतत् सा प्रिया प्राह नव्याऽऽनीता च या त्वया ॥ ४१० ॥
सैव स्वरसदने सर्वं सुष्ठु कार्यं करिष्यति । इत्यादि धर्षितोऽत्यन्तं शून्यचित्तोऽभवद्धली ॥ ४११ ॥ यतः—
सद्यो लक्ष्मी प्रिया-धान्यापहारे सति मानवा । भवन्ति दुःखिनोऽत्यन्तं चित्ते नूनमनारतम् ॥ ४१२ ॥
तूर्योऽवक् तनयस्तात ! भ्रमन् सुन्दरकानने । अहमेकतरोर्मूले स्थितो यावत्समाहितः ॥ ४१३ ॥
तावद् द्वौ पथिकौ वृक्षा धःस्थितावेत्य कुत्रचित् । एकेनोक्तं त्वया किंचित् चित्रं दृष्टं श्रुतं भुवि !' ४१४ ॥
दृश्यते भवतः श्यामं वदनं साम्प्रतं कथम् । किं वा केन हृता लक्ष्मी गृहिणी वा निगद्यताम् ॥ ४१५ ॥

तेनोक्तं शक्यते नैव वक्तुं दुःखं तवाग्रतः । यतः केनापि नो दुःखा-पहारं क्रियते जने ॥ ४१६ ॥ यतः—
"सुख-दुःखानां कर्ता हर्ता च न कोऽपि कस्यचिज्जन्तोः । इति चिन्तय सद्बुद्ध्या पुरा कृतं भुज्यते कर्म ॥ ४१७ ॥
पूर्वकृतसुकृत-दुष्कृतवशेन यदिह संपदो विपदः । आयान्ति तदन्यस्मिन् कृतेन किं रोषतोषेण" ॥४१८॥ इत्यादि कर्मसूक्तानि
द्वितीयः पुरुषः प्राहा—त्मनो दुःखं प्रकाशय । यतोऽन्यस्य पुरो दुःखे कथिते स्यान्नरः सुखी ॥ ४१९ ॥
आद्यः प्राहाज्जयिन्या राट्-पुत्रोऽहं वलभीपुरि । परिणेतु—मगां भूप-पुत्रीं शुभमतीं तम् ॥ ४२० ॥
इत्यादि चरितं कन्या—तार्क्ष्यापहरणान्तिकम् । कथयित्वाऽऽत्मनोऽशेषं स्थितो यावत् स दुःखितः ॥ ४२१ ॥
तावदन्यो जगौ भो ! भो ! दुःखं किं क्रियते हृदि । देव-दानव-गन्धर्वा-श्छुट्यन्ते नहि कर्मणः ॥ ४२२ ॥ यतः—
"शशि-दिवाकरयोर्ग्रहपीडनं गज-भुजंग-विहंगमबन्धनम् । मतिमतां च समीक्ष्य दरिद्रतां विधिरहो बलवानिति मे मतिः ४२३॥
जं चिअ विहिणा लिहिअं०
॥ ४२४ ॥
कृतकर्मक्षयो नास्ति कल्पकोटीशतैरपि अवश्यमेव भोक्तव्यं कृतं कर्म शुभाशुभम्" ॥ ४२५ ॥
विक्रमार्कनृपो मत्वा पुत्रस्य गमनं तदा । तन्वानो हृदये दुःखं बभूवेति मतिर्मम ॥ ४२३ ॥
आद्यः प्रोवाच किं भूप-पार्श्वे गमनेन......। यतश्चाकृतकार्या न शोभन्ते मनुजाः क्वचित् ॥ ४२७ ॥
मया मनोजवस्तार्क्ष्यो गमितः साम्प्रतं पुनः । तेनाहं रैवते शैले प्राणाँस्त्यक्ष्यामि निश्चितम् ॥ ४२८ ॥
आकर्ण्यैतदहं तत्रात्रा—ऽऽगां तात तवान्तिके । भारण्डोऽवक् त्वया पूर्व—माश्चर्यं वीक्षितं सुत ॥ ४२९

विक्रमार्को नृपो दध्या—वहो अस्य बलिष्ठता । ईदृक्ष न बलं दृष्टं कस्याप्यत्र महीतले ॥ २० ॥
यावद् श्रीविक्रमो दध्यौ बलमेषा नृणा महत् । तावदेकः सुरोऽभ्येत्य स्फुरद्देहद्युतिर्जगौ ॥ २१ ॥
भो विक्रम ! मया स्वर्ग—प्रभेण मत्ता किल । बलगर्वं तवच्छेत्तु इत्यादि दर्शितं समम ॥ २२ ॥
गर्वो न क्रियते पुंभि—र्बले लक्ष्म्या अते कुले । यतो भूमौ भवेत्तार—तम्य सर्वत्र भूपते ! ॥ २३ ॥
गते देवे नृपो मातुः प्रणम्य चरणौ जगौ । मातस्तव वच सत्यं बभूव गदित स्फुटम ॥ २४ ॥

इति बलतारतम्यपरीक्षायां कथा ।

अन्यदाऽश्वद्वय दूरात् सर्वलक्षणलक्षितम । आगत च तयोर्मध्यादेकस्मिन्नधिरुह्य च ॥ २५ ॥
विक्रमादित्यभूपालो—ऽमात्यमन्त्रिसमन्वितः । उद्याने समगाद् वेग–परीक्षार्थं पुराद्यदा ॥ २६ ॥ [ युग्मम् ]
अजानानो विपरीत–परीक्षा सहसा नृपः । निन्येऽश्वेनाटवीं सिंह–व्याघ्रवेतालदारुणाम् ॥ २७ ॥
गत्वा तरोरधो याव–दुत्ततारा‌श्वतो नृपः । सौकुमार्यतया तावन् मृत्युमाप तुरङ्गमः ॥ २८ ॥

---

१ बलिष्ठो हार्दिको होय-विधोऽजनि कथ भुवि । यावदेव नृपो दध्यौ तावद् इत्यादि नेक्षते ॥ तदैको निर्जर कश्चित् प्रादुर्भूय जगावद । इद मया कृतं ताव कोनबलमदच्छिदे ॥ अत पर न कर्तव्यो बलगर्वस्त्वया नृप ! । तारतम्य समस्त्येव बल विधाद्विवस्तुषु ॥ एवमुक्त्वा सुरे तस्मिन् विरुतोष गते सति । जगाम विक्रमादित्यो स्वकीयनगर क्रमात् ॥ प्रणम्य जननीपादौ विक्रमार्को जगावद ।–इति गपुस्तकेऽधिक पाठ ।

नृपतिस्तं मृतं ज्ञात्वा तृषया बाधितो भृशम् । मूर्च्छया पतितो भूमौ शुष्कवृक्ष इवाचिरात् ॥ २९ ॥
तावदेकेन कान्तार--वासिनाऽश्वपदेक्षणात् । तत्रागतेन भूपाल--स्तदवस्थो निरीक्षितः ॥ ३० ॥
महानेष नरः कश्चि--दिति ध्यात्वा सरोवरात् । आनीय सलिलं सिक्तः सचेताः क्षितिपोऽजनि ॥ ३१ ॥
निरीक्ष्य पुरुषं तं च निष्कारणोपकारिणम् । मुदितो मेदिनीनाथः प्रोवाचेति वचस्तदा ॥ ३२ ॥ यतः—
"विरला जाणंति गुणा विरला० ॥ ३३ ॥
दो[1] पुरिसे धरऊ धरा अहवा दोहिंपि धारिआ पुहवी । उवयारे जस्स मई उवयरिअं जो न फुंसेइ ॥३४॥
हुंति परकज्ज निरया० ॥ ३५ ॥
सन्मान्य[2] भूपतिं शैल—गुहायां निजसद्मनि । नीत्वा पुलिन्द्रकः पत्नी—युक्तो भक्तिमचीकरत् ॥ ३६ ॥
पुलिन्द्रकेण भूपालः कणिक्का-घृतदानतः । बुभुक्षापगमात्स्वस्थी—कृतः सन्मानपूर्वकम् ॥ ३७ ॥ यतः—
"पानीयस्य रसः शान्तं परान्नस्यादरो रसः । आनुकूल्यं रसः स्त्रीणां मित्राणां वचनं रसः ॥ ३८ ॥
संकुचन्ति कलौ तुच्छाः प्रसरन्ति महाशयाः । ग्रीष्मे सरांसि शुष्यन्ति कामं वार्द्धिस्तु वर्द्धते ॥ ३९ ॥
गृहमध्ये नृपं कृत्वा सुखसुप्तं पुलिन्द्रकः । ददौ द्वारे द्विपञ्चाश--च्छयोत्सेधां शिलां निशि ॥ ४० ॥

---

१ द्वौ पुरुषौ धरतु धरा, अथवा द्वाभ्यां धृता पृथिवी । उपकारे यस्य मतिः उपकृतं यो न भ्रंशयति ॥
२ विनिमन्त्र्य नृपं-ग. ।

तस्य रक्षाकृते सुप्तो गृहद्वारे पुलिन्दक । अन्यत्रस्था पुलिन्द्री चाशृणोद् व्याघ्ररव बहिः ॥ ४१ ॥
उत्थाप्य नृपतिं सद्य. प्रोवाचेति पुलिन्द्रिका । व्याघ्रेण मारितो नून पति पूर्वविरोधिना ॥ ४२ ॥
३ अधुना श्रूयते शब्दो बहिर्व्याघ्रस्य दारुण । दत्ता द्वारे द्विपचाश च्छया पत्या शिला च मे ॥ ४३ ॥
सा शिला मरिमयेणैव दूर कर्तुं च शक्यते । तेनावा निस्सरिष्याव: कथमस्मान्निकेतनात् ॥ ४४ ॥
श्रुत्वैतद् दक्षिणेनाङ्घ्रि-प्रहारेण शिला च ताम् । अपनीय बहिर्यावत् पश्यतिस्म महीपतिः ॥ ४५ ॥
६ तावद् तं च तयाऽवस्थ दृष्ट्वा भूपस्तयान्वित । प्रोवाचेति रदन् रे ! रे ! कथ दष्टिक्ष्मय हव ॥ ४६ ॥
"वेश्याका नृपतिश्चौरो नीर-मार्जार-दंष्ट्रिण । जातवेदा' कलादश्च न विश्वास्या इमे क्वचित्" ॥ ४७ ॥
तदाऽश्व पतिं प्रेक्ष्य तदा सद्य पुलिन्द्रिका । मुक्ता प्राणैर्विमोहेन यतो मोहश्च बन्धनम् ॥ ४८ ॥
९ तावत्पृष्ठागतेनैव सैन्येन नृपतिः पुरीम् । नीतो निषेधयामास सद्यो दान शुचाऽर्दित' ॥ ४९ ॥
इतश्च कतिभिर्मासैः श्रीपतेर्ध्यानहारिण. । जातमात्र. सुतो वक्ति शुकवद् वचन स्फुटम् ॥ ५०
आकारितो नृपस्तेना-रिष्ट भावीति चिन्तयन् । यावन्नायाति तावत्से जनक प्रति जल्पति ॥ ५१ ॥
१२ आनयात्र नृप शीघ्रं नो चेद् विघ्नं भविष्यति । श्रीपति स्वगृहे भूप-मानयामास वेगत. ॥ ५२ ॥

१ स पवनेनेति धिक्कृत ग । २ घोटकेनोपनीतस्य वनेऽवस्था तथागता । विस्मारिताऽधुना भूप कथं न तादृशी स्फुटम् ॥ आगत शिशुना प्रश्नो भूप सन्माप्तपूर्वकम् ग ।

तदा स बालकः प्राह भूपं प्रति स्फुटाक्षरम् । निषेधयसि किं दानं दीयमानं शिवप्रदम् ॥ ५३ ॥
×राजा प्राह मया पूर्वं दृष्टं दानफलं बहु । मत्वा महीपतेश्चित्तं बभाषे बालकस्तदा ॥ ५४ ॥
श्रृणु दानस्य माहात्म्यं विक्रमादित्यभूपते ! । कणिकाघृतदानेन जातोऽत्र नगरेऽस्म्यहम् ॥ ५५ ॥
द्वात्रिंशत्स्वर्णकोटीनां नाथस्य श्रीपतेः सुतः । पूर्वं मया ददे दानं भवतः सादरं वने ॥ ५६ ॥ ( युग्मम् )
भूपतिस्तेन संकेत–वचसा मुमुदेतराम् । भूपोऽवक् तर्हि भार्याया उत्पत्तिं कथयाधुना ॥ ५७ ॥
तेनोक्तं नगरेऽत्रैव दान्ताकव्यवहारिणः । सुता जाता सती कान्ता मम भूप ! भविष्यति ॥ ५८ ॥
राजा प्राह शिशोर्ज्ञानं कथं जातं तवेदृशम् । ततः स बालको देव–भाषयेति जगौ स्फुटम् ॥ ५९ ॥
एतत्प्रभावती वक्ति मदीयास्येऽवतीर्य च । श्रुत्वैतद् नृपतिर्दानो–पकारात्तत्परोऽभवत् ॥ ६० ॥
तस्मै बालाय भूपालः पुराणां शतपञ्चकम् । दापयामास मन्त्रीश–पार्श्वात्सन्मानपूर्वकम् ॥ ६१ ॥

इति पुलिन्द्रकथा ।

भाण्डागारिकमुख्यानां–ममात्यानां पुरोऽन्यदा । प्रोवाचेति नृपो यद् यद् याचते मम नन्दनः ॥ ६२ ॥
तत् तत्पुत्राय दातव्यं भवद्भिरादरात्सदा । ततस्तद् ददते भूप–सूनवे मार्गितं धनम् ॥ ६३ ॥ [ युग्मम् ]

४ जनैरिह. ग । ×"सुपात्रदानतो लोका लभन्ते सुखमद्भुतम् । अमुत्रा इमित्र क्षोणी–पते ! आप्नोहि सन्ततम्" ॥ इति ग-पुस्तके अधिकः पाठः । २. तत्पत्न्याः. ग ।

श्रान्ताकभ्रष्टिनोऽन्यस्य सोमदन्तेन सूनुना । श्रीविक्रमचरित्रस्या-भवत्प्रीतिर्मिथः क्रमात् ॥ ६४ ॥
अन्येद्युर्विक्रमादित्य-सूनुर्मित्रसमन्वितः । क्रीडां कुर्वन् ययौ बाह्यो-द्याने सवृक्षशाखिनि ॥ ६५ ॥
धर्मध्यानपरान् धर्म-घोषसूरीश्वरांस्तदा । उपविष्टास्तरोर्मूले ददर्श भूपनन्दन  ॥ ६६ ॥
गत्वा तत्र तरोर्मूले गुरु विनयपूर्वकम् । उपविष्टोऽग्रतः श्रोतु धर्मं भूपाङ्गजस्तदा ॥ ६७ ॥
धर्मघोषगुरुर्धर्मो-पदेश शिवशर्मदम् । श्रीविक्रमचरित्रस्य पुरतः प्रोक्तवानिति ॥ ६८ ॥ अत्रधर्मोपदेशकथा वाच्या ।
दानं वित्ताद् ऋत वाचः कीर्ति-धर्मौ तथायुषः । परोपकरण काया-दसारात्सारमुद्धरेत् ॥ ६९ ॥
श्रुत्वा धर्मं गुरोः पार्श्वे विक्रमादित्यनन्दन. । दान शील तपो भावान् पोषयामास सन्ततम् ॥ ७० ॥
आसन्ने परमपए पावेअव्वम्मि सयलकल्लाणे। जीवो जिणिंदभणिअ पडिवज्जए भावओ धम्म ॥ ७१ ॥
तत· श्रीविक्रमादित्य-पुत्रो देवगृहादिषु । भोग चकार दीनार-पञ्चशत्या जिनेशितु  ॥ ७२ ॥
शरीर मित्र भार्यार्थं यद्वद्  व्ययति नन्दनः । न ज्ञायते मनाग् तस्य संख्या संख्यावता पुनः ॥ ७३ ॥
ततो भूपान्तिके कोशाऽध्यक्षा एत्य जगु  स्फुटम् । स्वामिस्त्वत्तनयो भूरि-द्रव्यं व्ययति सन्ततम् ॥ ७४ ॥
शक्यो वारयितु नैवा-स्माभिः स  साम्प्रत मनाग् । राज्ञोक्त न क्षयः खच-नीयो युष्माभिरेकशः ॥ ७५ ॥
यतोऽस्य चरित सर्वे लोका जानन्ति मूलत. । देवानामपि दुर्ज्ञेयो विद्यतेऽसौ सुतो मम ॥ ७६ ॥

---

१ आसन्ने परमपदे प्राप्तव्ये सकलकल्याणे । जीवो जिनेन्द्रभणित प्रतिपद्यते भावतो धर्मम् ॥ २. इतो -ग ।

प्रकाराद् दास्यते शिक्षा तस्मै मूढा गिरैकदा । यत्कार्यं साध्यते साम्ना न तत्कर्कशतः कदा ॥ ७७ ॥
अन्यदा भूपतिर्देव-पूजां कृत्वा द्विधाऽऽदरात् । भोक्तुं चोपाविशद् यावत्-तावत्पुत्रः समागमत् ॥ ७८ ॥
राज्ञोक्तं मम मध्ये त्वं पुत्र ! भोक्तुमुपाविश । पितुर्मध्येऽदनं कर्तु-मुपविष्टः सुतस्ततः ॥ ७९ ॥
अन्तराले नृपः प्राह भो पुत्र ! मन्निदेशतः । यावज्जीवाम्यहं ताव-त्त्वया नित्यं यथारुचि ॥ ८० ॥
दिनाराणां शतं पञ्च दिनं प्रति सुधर्मणि । व्ययः कार्योऽङ्गभोगादौ भवता च स्वयं तथा ॥ ८१ ॥ [ युग्मम् ]
आकर्ण्यैतत्कुमारेण चिन्तितं यद् व्ययाम्यहम् । *तद् रोचते न भूपस्य जल्पनादिति मे मतिः ॥ ८२ ॥ यतः—
माण पणट्ठइ जइ न तणु तो देसडा चइज्ज० ॥ ८३ ॥ उत्तमाः स्वगुणैः ख्याता मध्यमास्तुपितुर्गुणैः० ॥ ८४ ॥
इत्यादि ध्यायतस्तस्य भक्तं जातं विषोपमम् । उत्थाय सोमदन्तान्ते गत्वा सोऽवग् नृपोदितम् ॥ ८५ ॥
अत्र स्थास्याम्यहं नैव गमिष्याम्यन्यनिवृति । पश्यामि निजभाग्यस्य फलं दूरं गतः पुनः ॥ ८६ ॥ यतः—
न श्रीः कुलक्रमायाता शासने लिखिताऽपि वा । खड्गेनाक्रम्य भुञ्जीत वीरभोग्या वसुन्धरा ॥ ८७ ॥
+दीसइ विविहं चरिअं जाणिज्जइ सँ[3]जणदुज्जणविसेसो । अप्पाणं च कलिज्जइ हिंडिज्जइ तेण पुहवीए ॥ ८८ ॥
यो न निर्गत्य निःशेषा-मवलोकयति मेदिनीम् । अनेकाश्चर्यसम्पूर्णां स नरः कूपदर्दुरः ॥ ८९ ॥

---

१. जिनालये.ग । *"यद् व्ययामि धनं धर्मकर्मादिष्वहमन्वहम् ।" तद् इति क.ग.पुस्तकेऽधिकः पाठः । २. ०भोज्या.ख.ग । ३. सुजण० क. ग । ×दृश्यते विविधं चरितं ज्ञायते सज्जन-दुर्जनविशेषः । आत्मा च कल्यते हिण्ड्यते तेन पृथिव्याम् ॥

स भीताः परदेशस्य बहालस्याः प्रमादत॰ । स्वदेशे निधन यान्ति काकाः कापुरुषा मृगाः । ९० ॥
अथ कल्ये परेद्युर्वा गेम्यते मयका रह । सुखेनात्र त्वया स्थेय स्मर्त्तव्योऽहं च सन्ततम् ॥ ९१ ॥ यतः—
" उपरि चन्दा तळि कुसुम दूरट्ठिअ विहसन्ति । वाससहसेहिं नवि मिल्इ नेहा नवि चुक्कन्ति ॥ ९२ ॥
दूरासन्न पडिवन्न-पालण सज्जणाण नो जयंति । सायर ससीण पिच्छह किमंतर किं च निव्वहणं ॥ ९३॥
सोमदन्तो जगावीदृग् वच किं कथ्यते त्वया । त्वा विना न क्षण स्थातु-मत्र शक्नोमि साम्प्रतम् ॥ ९४ ॥
मायया कुरुते मीतिं सोमदन्तो नृपाङ्गजे । सोमदन्ते तु भूभृगभू-र्धत्ते मीतिमकृत्रिमाम् ॥ ९५ ॥ यतः—
मुख पद्मदलाकार वाचा॰ ॥ ९६ ॥
सोमदन्तो जगौ स्वामिन् ! यत्र त्व च गमिष्यसि । तत्राह च गमिष्यामि सुखे दु.खे वने रणे ॥ ९७ ॥ यतः—
"पडिवन्न दिणयरवासराण दोपि अखंडिअ निच्च । सूरो न दिणेण विणा दिणो न सूरस्स विरहम्मि ॥" ९८ ॥
ततो भूपाङ्गज॰ प्राह मित्र मैवं वदाधुना । यतोऽस्ति दुष्करो मार्गः शीत ताप-तृषादिभिः ॥ ९९ ॥
तेनात्र तिष्ठ मित्र त्व-मित्युक्ते सुहृदूचिवान् । सुखदुःखे च यो मित्र न त्यजेत् स सुहृन्मतः ॥ १००॥ यत॰—
"क्षीरेणात्मगतोदकाय हि गुणा दत्ताः पुरा तेऽखिलाः, क्षीरे तापमवेक्ष्य तेन सहसा ह्यात्मा कृशानौ हुत ।
गन्तु पावकमुन्मनस्तदभवद् दृष्ट्वाऽपि मित्रापद, युक्त तेन जलेन शाम्यति सता मैत्री भवेदीदृशी ॥ १०१ ॥

१. गम्यते क ख । २. जयन्ति ग । ३ भूमिभुक्सूनुर्ध० ग । ४ गमिष्यामि ख । ५. सुहृत्तत. ख ।१ हुत क स ।

पापान्निवारयति योजयते हिताय, गुह्यं निगूहति गुणान् प्रकटी ।
आपद्गतं च न जहाति ददाति काले, सन्मित्रलक्षणमिदं प्रवदन्ति सन्तः ॥ १०२ ॥

३ मत्वा दृढाग्रहं तस्य खड्गपाणिर्नृपाङ्गजः । सोमदन्तयुतो रात्रौ निस्ससार पुराद् बहिः ॥१०३ ॥
पुर-ग्राम सरिच्छैलकाननानि पदे पदे । पश्यन् नृपाङ्गजो मित्र-युतोऽटव्यां सरो ययौ ॥ १०४ ॥
कुमारस्तृषितः पीत्वा जलं तत्र सरोवरे । पालिस्थपादपे पूर्व-मेत्य मित्रादुपाविशत् ॥ १०५ ॥
६ मेलयित्वा बहून् सद्यः कर्करान् सोमदन्तकः । कुमारोपान्तमेत्यावग् साम्प्रतं रम्यते किल ॥ १०६ ॥
कुमारोऽथ जगौ द्यूता--न्नैरस्यं जायते ध्रुवम् । यतो युधिष्ठिरादीनां विरोधोऽभून्मिथःपुरा ॥ १०७ ॥ यतः—
" द्यूतं सर्वापदां धाम द्यूतं दीव्यन्ति दुर्धियः । द्यूतेन कुलमालिन्यं द्यूताय श्लाघतेऽधमः ॥ १०८ ॥
९ राज्यच्युतिं वल्लभया वियोगं द्यूतान्नलः प्राप गतोरुभोगम् । प्रचण्डितामण्डितबाहुदण्डा-स्ते पाण्डवाः प्रापुररण्यवासम्॥१०९॥
करघट्ठा न हु पण्डुरा सज्जण विरला हुन्ति । सूनां देउल सेवीइं तुज्ज पसाइं द्यूत ॥ ११० ॥
द्यूतं च मांसं च सुरा च वेश्या० ॥ १११ ॥
१२ सोमदन्ताग्रहाद् भूप-पुत्रे दीव्यति कर्करैः । सोमदन्तो जगौ मित्र ! लभते नात्र गम्यते ॥ ११२ ॥
विना न लम्भनं द्यूतं भातीन्दुमिव यामिनी । तेनातो लम्भनं किंचित् कृत्वा मित्र! च रम्यते ॥ ११३ ॥

१ पुत्राद्० क, ख । २. मू०नन्दनः, ग । ३. प्रोचाचेत्यागतं मित्र रम्यते साम्प्रतं मनाक्, ग ।४ . सोमदन्तो ज-ग ।

कर्करान् यः शत द्यूताद् हारयत्यत्र सम्प्रति । तेनैक हार्यते नेत्र प्रतिज्ञेत्यावयोरिह ॥ ११४ ॥
दीव्यताऽथ कुमारेणै-कस्मिन्नेत्रे च हारिते । मुंहृत्प्राहाधुना द्यूतरमणेन सृतं खलु ॥ ११५ ॥
वालयिष्याम्यहं नेत्रमित्युक्त्वा विक्रमार्कभूः । अहार्षीन्नयनं दीव्यन् द्वितीयमपि तत्क्षणात् ॥ ११६ ॥ यतः—
दीव्यतां देहिनां द्यूते ध्यायतां पश्यतां स्त्रियम् । अन्धत्वं जायते नेत्रे हृदयस्य च निश्चितम् ॥ ११७ ॥
जिते नेत्रद्वये सोम-दत्त प्रीतिपराङ्मुखः । लोचनद्वितय लातु दध्यावेवं पुनः पुनः ॥ ११८ ॥
मार्गितेनाधुना किं मे नेत्रयुग्मेन मित्रतः । भविष्यति यदा राज्य मार्गयिष्याम्यहं तदा ॥ ११९ ॥
लोचनानर्पणे राज्य-मस्याश्वादिविराजितम् । कृत्वा छलमहं सद्यो ग्रहीष्यामि ततः स्फुटम् ॥ १२० ॥ यतः—
'खलः सत्क्रियमाणोऽपि ददाति कलहं सताम् । दुग्धधौतोऽपि किं याति वायसः कलहंसताम् ॥ १२१ ॥
विशिष्टकुलजातोऽपि यः खलः खल एव सः । चन्दनादपि सम्भूतो दहत्येव हुताशनः ॥ १२२ ॥
राईसरिसवमित्ताणि परच्छिद्दाणि पासइ । अप्पणो बिल्लमित्ताणि पासतो वि न पासइ ॥ १२३ ॥
कुमारोऽथ नलन्मार्गे यद्यद् वस्तु मनोरमम् । प्राप तत्तत्स्वमित्राय दत्त्वैव खादति स्वयम् ॥ १२४ ॥
एवं कुर्वन् सदा प्रीतिं कुमारः सुहृदे स्वयम् । सुन्दराह्ववने पश्यन् कौतुकानि ययौ क्रमात् ॥ १२५ ॥

---

१. मित्रोऽत्रगुरुच्यते द्यूताग्नेरस्य हि भविष्यति ग । २ नेत्रेण भूपनन्दन लभिष्यते यदा॰ ग । ३ राजिसर्षपमात्राणि परच्छिद्राणि पश्यति । आत्मनो बिल्वमात्राणि पश्यन्नपि न पश्यति ॥

सरोवरे पयःपूर्णे नीरं पीत्वा नृपाङ्गजः । मित्रयुक्तः समागत्य न्यषीदत् पालितरोरधः ॥ १२६ ॥

कुर्वन् गोष्ठीं तदा सोम-दन्तो हास्याज्जगावदः । त्वन्नेत्रे स्तो मम द्यूत-हारितत्वान्नृपाङ्गज ! ॥ १२७ ॥

श्रुत्वैतद् विक्रमादित्य-सूनुश्छूर्यैक्षणद्वयम् । कर्षयित्वाऽथ मित्राय दत्त्वा चेदं जगौ पुनः ॥ १२८ ॥

उद्धारः क्रियतेऽस्माभि-र्नैव कुत्र कदाचन । दृष्ट्वाऽसमञ्जसं सोम-दन्तः प्राह छलादिति ॥ १२९ ॥

भो मित्र ! भवताऽकस्मा-दिदं किं विहितं स्फुटम् । मयेह हसितं नून-मावां स्यावाधुना कथम् ॥ १३० ॥

मुक्ताऽवन्तीपुरी दूरे व्यालव्याप्तमिदं वनम् । मरिष्यावोऽधुना नूनं भवतो नयने विना ॥ १३१ ॥

इत्यादि बहुशो मायां सोमदन्तः करन् स्फुटम् । रोदःकुक्षिंभरिर्बाढं रोदयामास पक्षिणः ॥ १३२ ॥

हास्यं वितन्वतेदानीं मया स्वामिन् नृपाङ्गज । दुःखाब्धौ पातितोऽपारे नेत्रकर्षणतोऽधुना ॥ १३३ ॥

अविमृश्य त्वया स्वामि-स्तादृशं विहितं द्रुतम् । अविमृश्य कृतं कार्यं दुःखाय जायते नृणाम् ॥ १३४ ॥

"सहसा विदधीत न क्रिया-मविवेकः परमापदां पदम् । वृणते हि विमृश्यकारिणं गुणलुब्धाः स्वयमेव सम्पदः ॥१३५॥

कुमारः प्राह भो मित्र ! कस्यापि नैव दूषणम् । ममैव कर्मणो दोषोऽस्तीति दुःखं कुरुष्व मा ॥ १३६ ॥ यतः—

ये वज्रमयदेहास्ते शलाका पुरुषा अपि । न मुच्यन्ते विना भोगं स्वनिकाचितकर्मणः ॥ १३७ ॥

यथा धेनुसहस्रेषु वत्सो विन्दति मातरम् । एवं पूर्वकृतं कर्म कर्तारमनुधावति ॥ १३८ ॥

---

१. ऽकस्माज्ज० ग । २. -भरिः क ।

हसन्तो हेलया कर्म यत्कुर्वन्ति प्रमादिनः । जन्मान्तरशतैरेते शोचन्ते(न्तो)ऽनुभवन्ति तत् ॥ " १३९ ॥
मदीयपदबन्धेन हे मित्रावयोः खलु । भविष्यति द्रुत मृत्यु-स्तेन त्वं व्रज सम्प्रति ॥ १४० ॥
मित्रं दध्यावथ नून-मत्रस्थश्च मरिष्यति । अहं मुधा मरिष्ये नु कथमत्र स्थितो वने ॥ १४१ ॥
एवं विचिन्त्य दुष्टात्मा सोमदन्तो जगावद' । सुहृन्मम पदौ गन्तु वहतो न मनागपि ॥ १४२ ॥ यतः—
"मनस्यन्यद् वचस्यन्यत् क्रियायामन्यदेव हि । वेश्यानामिव नीचानां स्वभावो विद्यते सदा " ॥ १४३ ॥
कुमारः प्राह सरलस्वभाव इति तं प्रति । हे मित्र वत्सल ! स्वच्छ ! किं न मे वचनं कुरु ॥ १४४ ॥
"वचने मानसे काये क्रियायामपि सन्ततम् । स्वभावो विद्यते तुल्य उत्तमानां तनुमताम् ॥ १४५ ॥
अहित मानवे नित्यं कुर्वाणेऽपि निरन्तरम् । हितमेव वितन्वन्ति स्वदेहेनोत्तमा नराः ॥ १४६ ॥
अयं निज० परो वेति गणना लघुचेतसाम् । उदारचरितानां च वसुधैव कुटुम्बकम् ॥ १४७ ॥
उपकर्तुं प्रिय वक्तुं कर्तुं स्नेहमकृत्रिमम् । सुजनाना स्वभावोऽयं केनेन्दुः शिशिरीकृत ॥" १४८ ॥
कृत्रिमस्नेहवान् सोम-दन्तो भूपाङ्गजक्रमौ । प्रणम्य स्वेच्छयाऽचालीत् ततः स्थानाद्दुराशय' ॥ १४९ ॥ यत —
वृक्ष क्षीणफलं त्यजन्ति विहगाः, शुष्कं सरः सारसाः, पुष्प पर्युषित त्यजन्ति मधुपा दग्ध वनान्तं मृगाः ।
निर्द्रव्यं पुरुष त्यजन्ति गणिका भ्रष्ट नृपं सेवका, सर्वः कार्यवशाज्जनो हि रमते कः कस्य को वल्लभ' ॥" १५० ॥

---

१. रे रे द० क ख । सुहृद् मा-ग०

तत उत्थाय भूपाल–पुत्रोऽन्यस्य तरोरधः । गत्वा शनैः शनैः साय–मुपविष्टः समाहितः ॥ १५१ ॥
वृद्धस्तस्मिन् तरौ भार–द्वाजः पुत्रशतान्वितः । वसति स्म पुरा नित्यं निशीथिन्यां समाधिना ॥ १५२ ॥
दिने दिशोदिशं सर्वे पुत्रा गच्छन्ति दूरतः । फलं सायं समागत्यै–वैकं नत्वा पितुर्ददुः ॥ १५३ ॥
भारद्वाजो जगौ कोऽस्तीत्यतिथिरत्र साम्प्रतम् । श्रुत्वैतद् भूपभूः प्राह तातातिथिरहं पुनः ॥ १५४ ॥
भारद्वाजो जगौ कस्त्व–मित्युक्ते प्राह भूपभूः । दीनो दुःस्थः कृपापात्र–मत्रानीतोऽस्मि कर्मणा ॥ १५५ ॥
भारद्वाजो जगौ पुत्रा–तिथिमत्र समानय । तेनोत्थाय पितुः पार्श्वे समानीतोऽतिथिर्द्रुतम् ॥ १५६ ॥
भारद्वाजो ददौ तस्मै फलानि तावदादरात् । यावदाकण्ठमापूर्ण–हृदयो भूपभूरभूत् ॥ १५७ ॥
उत्तार्याधः कुमारोऽथ मोचितः पक्षिणा तरोः । एवं कुर्वन् फलाहारं नित्यं तस्थौ समाधिना ॥ १५८ ॥
भारद्वाजोऽन्यदा पुत्र–मुत्सूरे च समागतम् । अप्राक्षीत् किं भवानागाद् वेलातिक्रमणान्निशि ॥ १५९ ॥
भारद्वाजसुतः प्राह कनकाह्वपुरेऽनघे । ताताहमागमं कुर्वन् स्वयं क्रीडां वने वने ॥ १६० ॥
तस्मिन् कनकसेनोर्वी–पतेर्भार्याऽभवद् रतिः । कनकश्रीस्तयोः पुत्री बभूवान्धा स्वकर्मतः ॥ १६१ ॥
क्रमाद्यौवनमापन्ना यावता काष्ठभक्षणम् । गच्छन्ती चाद्य भूपेन स्थापिता दशवासरान् ॥ १६२ ॥
कन्यां द्रष्टुं पुरीलोकास्तत्रेयुर्बहवस्तदा । स्थितोऽहं वीक्षितुं तां च तेनोत्सूरो ममाजनि ॥ १६३ ॥

---

१ यावती. ख. ग. । २. पुरा–क. ।

तात तस्या कथ सज्जी-करिष्यतो (ष्येते) विलोचने । पिता प्राह मलोत्सर्गं मासान्ते यत्करोम्यहम ॥ १६४ ॥
सं नेत्रप्रक्षालनापत्र-रसमिश्रीकृतः प्रगे । तस्या नयनयोरेक-वार पुत्रा प्रक्षिप्यते ॥ १६५ ॥
तदा सा कन्यका तारा वीक्ष्यते दिवसे दिवि । उपकारः कृत' पुंभि-र्यतो भवति सौख्यदः ॥ १६६ ॥
श्रुत्वेतन्निशि भूपाल-पुत्रः प्रातः प्रमोदितः । मलोत्सर्गरसेनाशु सज्जीचक्रे स्वलोचने ॥ १६७ ॥ यतः—
अमन्त्रमक्षरं नास्ति नास्ति मूलमनौषधम । अनाथा पृथ्वी नास्ति आम्नायाः खलु दुर्लभाः ॥ १६८ ॥
मन्त्र तन्त्रौ-षधी रत्न-मुख्यपदार्थसन्तते । अचिन्त्यो विद्यतेऽत्यन्त प्रभाव उत्तमो भुवि ॥ १६९ ॥
तारा पश्यन् दिने भूप-पुत्र' प्रक्षालिताम्बर' । भारण्डजमलोत्सर्ग-गुटिका बहुशो ललौ ॥ १७० ॥
कुमार तादृश वीक्ष्य भारण्डो जगावदः । नवीनो विद्यते वेष. कुतोऽद्य भवतो वद ॥ १७१ ॥
कुमारः प्राह भवतः प्रसत्तिः फलिताऽद्य मे । मुख्यभूवमहं बाढ तत्तत्फलप्रदानतः ॥ १७२ ॥
यथादेशो भवेत्तात ! त्वदीयो मम सम्मति । तदा तत्र पुरे गत्वा कन्यां सज्जीकरोम्यहम् ॥ १७३ ॥
भारण्डः प्राह यद्येन तर्हि त्व तिष्ठ साम्प्रतम् । ममापत्यानि सर्वत्र गच्छन्ति च सदा प्रगे ॥ १७४ ॥
कथयिष्याम्यहं सूनो-रेकस्य पुरतो निशि । कनकाह्वपुरे मध्येपक्ष कृत्वा नरं नय ॥ १७५ ॥
आत्मस्थाने स्थितो भूरि दिनान्येष नर सुखम् । परोपकारकुशलो विद्यते जगदुत्तमः ॥ १७६ ॥ यतः—

१ ततस्त- २. करिष्यति. ग ३. अंज्यते नयने तस्यास्तद् रसेन स्फुटं यदि ग ४ अधना. ख ।

शास्त्रं बोधाय दानाय धनं धर्माय जीवितम् । वपुः परोपकाराय धारयन्ति मनीषिणः ॥ १७७ ॥
वरं करीरो मरुमार्गवर्त्ती यः पान्थसार्थं कुरुते कृतार्थम् । कल्पद्रुमैः किं कनकाचलस्थैः परोपकारप्रतिलम्भदुःस्थैः ॥१७८ ॥
विरला जाणन्ति गुणा० ॥ १७९ ॥
यात्रार्थं भोजनं येषां दानार्थं च धनार्जनम् । धर्मार्थं जीवितं येषां ते नराः स्वर्गगामिनः ॥ १८० ॥
शैले शैले न माणिक्यं मौक्तिकं न गजे गजे । साधवो न हि सर्वत्र चन्दनं न वने वने ॥ ” १८१ ॥
मध्येपक्षं विधायाशु तं यावत्तनयोऽचलत् । भारण्डाजो जगौ ताव-देवं भूपात्मजं प्रति ॥ १८२ ॥
वत्स ! त्वं स्वच्छचित्तोऽत्र स्थितोऽसि वल्लभो मम । तेन त्वया सदा चित्ते स्मर्त्तव्योऽहं निजात्मवत् ॥ १८३ ॥ यतः—
“सव्वो जणो पच्चक्ख-दंसणे कुणइ निब्भरं नेहं । सो सुअणो जो दूर-ट्ठिआण पालेइ पडिवन्नं ॥ १८४ ॥ इत्यादि ॥”
कुमारोऽवक् त्वया तात ! स्मर्त्तव्योऽहमनारतम् । ततो भारण्डपुत्रेण स नीतः कनके पुरे ॥ १८५
मुत्कलाप्य कुमारं स पक्षी चुण्यर्थमीयिवान् । ततः सद्भूषणो भूप-सूनुः श्रीदापणे ययौ ॥ १८६ ॥
कृष्णास्यं श्रेष्ठिनं वीक्ष्य पप्रच्छेति नृपात्मजः । किमर्थं भवतः श्रेष्ठिन् ! विद्यते श्यामलं मुखम् ॥ १८७ ॥
श्रीदोऽवक् शक्यते नैव वक्तुं सम्प्रति सत्तम ! । ममास्ति मदनः पुत्र एको दीव्यत्तनुच्छविः ॥ १८८ ॥
रोगग्रस्तः कुरूपोऽभू-दधुना दैवतः सुतः । उपचाराः कृताः पूर्वं भूरिशः सोऽपि तादृशः ॥ १८९ ॥

१. पुत्रो यावताऽ-ग. २.सर्वो जनः प्रत्यक्षदर्शने करोति निर्भरं स्नेहम् । स सुजनो यो दूरस्थितानां पालयति प्रतिपन्नम्॥

कुमारोऽवग् मनाग् दुःख कार्यं श्रेष्ठिंस्त्वया नहि । दिव्याक्षं ते करिष्यामि सूनुमौषधयोगतः ॥ १९० ॥
ततो भूपसुतो गत्वा श्रीश्रेष्ठिनो निकेतने । सज्जीचकार तत्पुत्रं नानाडम्बरपूर्वकम् ॥ १९१ ॥
ततः श्रीदो व्यधात् तस्य गौरवं भोजनादिभिः । श्रीविक्रमचरित्रोऽपि तस्थौ तत्र समाधिना ॥ १९२ ॥ यतः—
विदेशान्तरितस्यापि भाग्य जागर्त्ति तद्वत । अभ्रे तिरोहितस्यापि भानोर्भासस्तमोपहाः ॥ १९३ ॥
इतः पितरमापृच्छ्य कनकश्री नृपाङ्गजा । अश्वारूढाऽचलत्काष्ठ-भक्षणार्थं नृपाध्वनि ॥ १९४ ॥
तावत्तूर्यरिव श्रुत्वा भूरिशो भामिनीजनाः । मुक्त्वा निज निज कार्यं कन्या द्रष्टु समाययुः ॥ १९५ ॥ यत.—
" त्रीहं त्रिण्णि पीआरडा कलि कज्जल सिंदूर । त्रीहं त्रिण्णि अइवल्लहा दूध जमाइ तूर ॥ " १९६ ॥
श्रुत्वा तूर्यरिव प्राह श्रेष्ठिनं प्रति वैक्रमः । किमर्थं बहवो लोका मिलितास्सन्ति सम्प्रति ॥ १९७ ॥
आदितो भूमिभुक्-पुत्रीवृत्त श्रेष्ठी प्रचीकथत् । ततश्च वैक्रमः शीर्ष-मधूनयत् पुनः पुनः ॥ १९८ ॥
श्रेष्ठी प्राह शीर.कम्प-कारण कथ्यतां मम । कुमारोऽवग् मुधा कन्या सम्प्रत्यत्र मरिष्यति ॥ १९९ ॥
श्रेष्ठयवग् विद्यते कोप्युपायोऽत्र सत्तमाधुना । येनैव कन्यका दिव्य-नेत्रा सद्यो भविष्यति ॥ २०० ॥
ओमित्युक्ते कुमारेणो-त्थाय श्रीदस्ततः क्षणात् । गत्वा भूपान्तिके प्राह पुत्री सम्प्रति वार्यताम् ॥ २०१ ॥
एको वैदेशिकश्चारु-वृत्तो मद्गृहमाययौ । स एव कन्यका दिव्य-चक्षुषी च करिष्यति ॥ २०२ ॥
श्रुत्वैतद् भूपतिः सद्यः प्राहेति पुत्रिकां प्रति । एको वैदेशिको दिव्यनेत्रां त्वा च करिष्यति ॥ २०३ ॥

तेन पश्चात्समागच्छे–त्युक्त्वा भूपः पुनः पुनः । कष्टेनैव निजावास–मानयामास पुत्रिकाम् । २०४ ॥
राजा प्रोवाच भो श्रेष्ठिन् ! सज्जां कारय पुत्रिकाम् । श्रेष्ठ्यवग् तस्य वैद्यस्य स्वामिन् किं दास्यते त्वया ॥ २०५ ॥
राजाऽवक् तस्य वैद्यस्य दास्ये राज्यार्द्धमञ्जसा । ततो वैक्रमदोपन्नो भूपपार्श्वे समाययौ ॥ २०६ ॥
तमौषधं च दोषज्ञः क्षिप्त्वा तस्या विलोचने । पश्यन्तीं कन्यकां चक्रे नानाडम्बरपूर्वकम् ॥ २०७ ॥
ततो भूपो व्यधात्पुर्या–मुत्सवं नर्त्तनादिभिः । वैद्यं दिव्यतनुं दृष्ट्वा भूपपुत्री जगाविति ॥ २०८ ॥
अस्मिन्भवेऽस्य वैद्यस्य करिष्यामि करग्रहम् । नो चेद् वह्नौ प्रविक्ष्यामी–त्युक्ते प्रोवाच भूपतिः ॥ २०९ ॥
हे पुत्रि ! कुलगोत्रादि–सम्बन्धो ज्ञायतेऽस्य न । तेनास्मै त्वं कथं दास्ये इत्युक्ते कन्यका जगौ ॥ २१० ॥
विचारो नैव कर्त्तव्य–स्तातात्र साम्प्रतं त्वया । भवेऽस्मिन्नस्य वैद्यस्य करिष्ये पाणिपीडनम् ॥ २११ ॥
नो चेदग्नौ प्रविक्ष्यामी–त्युक्ते प्राहावनीपतिः । भो अमात्या इयं कन्या मदुक्तं नैव मन्यते ॥ २१२ ॥
तेन मन्त्रेत्रतोऽन्यत्रा—राम-भूमिधरादिषु । गत्वा यूयं च वैद्यस्य दत्त पुत्रीं दुराशयाम् ॥ २१३ ॥
ये च सन्ति द्विषो दुःखसाधाः सम्प्रति भूमिपाः । तेषां देशो मदादेशाद् दत्त यूयं वराय च ॥ २१४ ॥
भूपादेशात्तदा सद्यो गत्वोद्याने च कन्यकाम् । भूपोक्तं च ददुर्देशं तस्मै वैद्याय मन्त्रिणः ॥ २१५ ॥
भूपभूदत्तद्रव्येण कारयित्वा महद् गृहम् । चित्राशालादिरोचिष्णु तत्राहस्थात्स प्रियासखा(खः) ॥ २१६ ॥

---

१. भूपभूर्दत्तः. ख ।

ततोऽमात्यैर्नृपालाय तत्सर्वं कथितं द्रुतम् । राजाऽवक् पुत्रिका दुःखभागिनी भविता भृशम् ॥ २१७ ॥
उपकारो मया पुत्र्याः कृतः सज्जीकरणत° । असौ मम कृतं नैव मन्यते वैरिणी सुता ॥ २१८ ॥ यतः—
" माता पिता सुतः पुत्री सुहृत् सज्जन-सेवकौ । आत्मार्थं सततं कर्तुं मिलन्त्येकत्र हर्षिताः ॥ २१९ ॥
इतो वैद्येन लेखेन ज्ञापितं क्षेत्रिनामिदम् । आगस्यात्र मदीयाज्ञा-मङ्गीकुर्वन्तु तत्क्षणात् ॥ २२० ॥
मया भूमिपतेः पुत्री परिणीता सदुत्सवम् । भूपेन विषया दत्ता एते च भवतां पुरा ॥ २२१ ॥
अभूवं भवतां स्वामी वैद्योऽहं दैवयोगतः । तेन मम समागत्य सपर्यां कुरुतादरात् ॥ २२२ ॥
नो चेदहं करिष्यामि भवतां निग्रहं द्रुतम् । श्रुत्वेतन्निखिलैर्द्विड्भिरेकीभूयेति चिन्तितम् ॥ २२३ ॥
यैरुत्तमकुलोत्पन्न-भूपतेर्बलशालिनः । न मनाग् विहिता सेवा पूर्वं कुत्रापि कस्यचित् ॥ २२४ ॥
तैरस्माभिरसौ वैद्योऽधमजातिसमुद्भवः । अज्ञातकुलवंशश्च कथं सेविष्यतेऽधुना ॥ २२५ ॥ यतः—
"अन्यस्माल्लब्धोष्मा नीचः प्रायेण दुस्सहो भवति । न तपति रविरिह तादृग् यादृगयं वालुकानिकरः ॥२२६ ॥
नीच उच्चैः पदं प्राप्य न माति मानसे मनाग् । वर्षास्विव प्रवाहो हि नद्या लब्ध्वा जलं तटे ॥ २२७ ॥
विमृश्येत्यरिभिस्तस्मै ज्ञापितं निजसेवकात् । करिष्यामो वयं नैव निदेशं भवतो मनाग् ॥ २२८ ॥
काऽपि शक्तिर्भवेच्चित्ते तदाऽऽगच्छात्र सम्मुखम् । नो चेत्वं मौनमाधाय तिष्ठ तत्रैव वैद्यराट् ॥ २२९ ॥

१ भवदीया ममाधुना ग । २. वर्षासु लघुप्रवाह इव लब्ध्वा° ग ।

एतद्राज्यार्धदानेन वाहितस्त्वं महीभुजा । देवानामपि दुर्ग्राह्या वयं दुर्गादिना खलु ॥ २३० ॥
श्रुत्वैतद् वैद्यराट् सद्यो–ऽवशीकरणविद्यया । आदौ मुख्यद्विषद्गेहे जगामातुलविक्रमः ॥ २३१ ॥ यतः—
एकोऽहमसहायोऽहं कृशोऽहमपरिच्छदः । स्वप्नेऽप्येवंविधा चिन्ता मृगेन्द्रस्य न जायते ॥ २३२ ॥
सीह सउण न चंदबल नवि जोइ धणरिद्धि । एकल्लउ लंक्खहं भिडइ जिहां साहस तिहां सिद्धि ॥ २३३ ॥
सुप्तस्य वैरिणः कंठं गृहीत्वा वैद्यराट् जगौ । भो भो द्विषन् ! मदीया–ज्ञामङ्गीकुरुष्व साम्प्रतम् ॥ २३४ ॥
नो चेदसौ मदीयोऽसि–स्त्वदीयं कण्ठकन्दलम् । छेत्स्यति तत्क्षणात् तीक्ष्णधारः कमलनालवत् ॥ २३५ ॥
यः कश्चित् तव देवोऽस्ति स्मर्यतां स त्वयाऽधुना । अहं वैद्योऽस्मि निःशेष–वैरिरोगोपशान्तये ॥ २३६ ॥
श्रुत्वैतत्कम्पमानाङ्गः स वैरीति जगौ तदा । भो ! भो ! सात्त्विक ! मां मुञ्च सेविष्येऽहं तव क्रमौ ॥ २३७ ॥
वैद्यः प्राहाद्य मुक्तोऽसि जीवंस्त्वं कृपया मया । वशीकरोम्यहं सर्वान् देव-दानव-मानवान् ॥ २३८ ॥
कनकाह्वपुरोद्याने कल्ये यदि प्रगे द्रुतम् । समेष्यसि न सेवायै मम त्वं च सुभक्तितः ॥ २३९
तदाऽसौ करवालो मे त्वदीयं कण्ठकन्दलम् । छेत्स्यति तत्क्षणात्तीक्ष्ण-धारः कमलनालवत् ॥ २४० ॥
मुख्यो वैरी तदा तस्य वैद्यस्य शासनं तम् । प्रतिपद्य जगौ स्वामि–स्तवातः सेवकोऽभवम् ॥ २४१ ॥
एवं सर्वद्विषां सौवं दर्शयित्वा पराक्रमम् । कृतकृत्यस्ततो वैद्यो बाह्योद्यानमगान्निशि ॥ २४२ ॥

१ लक्खिर्हिं॰ ग । २. पाथोजना॰ ग ।

आकार्य सेवकान् वैद्य–कुमारः प्रोक्तवानिति । चारुचित्रैः सभां सर्वां यूयं कुरुत मञ्जुलाम् ॥ २४३ ॥
कल्ये सर्वे द्विषः प्रातः कार्यं मुक्त्वा निजं निजम् । सेवां कर्तुं समेष्यन्ति मदीयामादराद् द्रुतम् ॥ २४४ ॥
तेषां प्रत्यर्पणायाशु ताम्बूलं वसनादिकम् । वैद्यराडानयामास प्रेष्य पुर्यां स्वसेवकान् ॥ २४५ ॥
अथायास्यति विद्वेषि वर्गोऽत्र मा निषेवितुम् । ध्यात्वेति चित्रशालायामुपाविशत्स वैद्यराट् ॥ २४६॥
वैद्यराड्नेप्सितं मत्वा भूपभृत्या नृपान्तिके । यावज्जगुः प्रभो ! तावत् भूपोऽवग् मन्त्रिणां पुरः ॥ २४७ ॥
अहो अद्यापि वैद्यस्य न भृत्या न तुरङ्गमा । नेभाः सन्तीति यद्वक्ति तन्मूर्खस्य हि लक्षणम् ॥ २४८ ॥ यतः—
"मूरुग कुद्दगा दामगाणि उच्छूल घंटिआओ अ । पिंडेइ अपरितंतो चउप्पया नत्थि अ पेंचू वि "॥ २४९ ॥
ज्ञापिता भूभुजा पुत्रीत्येव किं तेऽधुना पतिः । बभूव प्रथिलः किंवा वाते सुष्वाप किं वने ॥ २५० ॥
ज्ञापितं सुतया भर्त्ता विद्यते मे विचक्षणः । श्रुत्वैतद् भूपतिर्यावत्रिःससार पुराद् बहिः ॥ २५१ ॥
इतो दृष्ट्वा द्विषस्तावत् सर्वे स्वस्वबलान्विताः । गृहीतोपायना वैद्य नन्तुमुद्यानमाययुः ॥ २५२ ॥
रत्न स्वर्ण तुरङ्गादि ढौकनीकृत्य तत्क्षणात् । सर्वे ते विद्विषो वैद्य–नाथं नेमुः सुभक्तितः ॥ २५३ ॥
कृत्वा केऽप्यञ्जलिं वैद्य नाथस्य पुरतः स्थिताः । चिक्षिपुः केऽपि वातं च व्यजनेन प्रमोदिताः ॥ २५४ ॥

---

१. 'सभासीनं प्रगे वैद्यं भर्त्यावाकर्ण्य भूपतिः । वैरिणामागमं श्रुत्वा मन्त्रिणां पुरतो जगौ ॥' ग । २. तस्यापि ग । ३ मूरुगर्थं पूय पश्यत पश्यत ग । ४ पसुविअपि ख । ५ मूरुत्वा ग ।

केऽपि विश्रामणां चक्रुः पादयोर्वैद्यभूपतेः । केऽपि जयजयेत्यादि-शब्दं भट्टा व्यधुस्तदा ॥ २५५ ॥

दृष्ट्वैतद् भूपतिर्हृष्टो दध्याचेवं पुनः पुनः । जामाताऽयं महान् जातो ममाद्य सत्पराक्रमः ॥ २५६ ॥

पुनर्भूपः क्षणाद् दध्यौ नायं चास्य पराक्रमः । किं त्वेतन्मत्सुता-चारु-प्रभावस्य विजृम्भितम् ॥ २५७ ॥

स्वभावेन पदं प्रौढं प्राप्य नीचा नराः सदा । आडम्बरं वितन्वन्ति गर्वपर्वतमाश्रिताः ॥ २५८ ॥

मम पुत्र्याः प्रसादेन महत्त्वं गमितो जनैः । अयं वैद्यो न देहेऽपि माति गेहेऽपि हर्षितः ॥ २५९ ॥

यद्यपि विद्विषोऽशेषा नमन्त्यस्य पदाम्बुजम् । तथापि वैद्यनाथस्य नीचत्वं याति नो कदा ॥ २६० ॥ यतः—

न टिट्टिभो गच्छति हंसलीलया न वायसः कूजति कोकिलारवम् ।
यवाः प्रकीर्णा न भवन्ति शालय-स्तथापि नीचः प्रकृतिं न मुञ्चति ॥ २६१ ॥ इत्यादि ॥

वैद्येन विद्विषः सर्वे वस्त्राभरणदानतः । सन्मानीता मिथः प्रोचु-रार्य! स्वामी वरोऽस्ति नः ॥ २६२ ॥

एवमाराध्य तं वैद्य-मुपदादानतस्तदा । धृताज्ञा विद्विषस्तस्य स्वं स्वं स्थानं ययुः पुनः ॥ २६३ ॥

पराक्रमं तदा तस्य वैद्यस्य मेदिनीपतिः । विज्ञाय संशये चारु-वंशजे पतितस्तदा ॥ २६४ ॥

वार्द्धेस्तटेऽन्यदा वैद्य--भूपः क्रीडत्परं किल । ददर्श पतितं काष्ठ-विलग्नं व्याकुलाशयम् ॥ २६५॥

---

१ चारुः प्र-ग । २. हीनजात्य-धमाचारा-ज्ञातवंशादिकारणैः । ग । ३. प्राप्य मानवे-ग । ४. संशये पतितो नीच-कर्मणश्च विलोकनात्. ग । ५.क्रीडापरो नरम्. ग । ६. चेतनाकुलम्. ग ।

उपपन्नकरुणोऽथाय भूपतिर्भृत्यपार्श्वतः । आनिनाय द्रुतं सौध स्थानकं तं नरं तदा ॥ २६६ ॥
उपचारैर्नृपो वैद्यैस्तैलमर्दनपूर्वकम् । सचेतनं नरं सद्यः कारयामास सेवकैः ॥ २६७ ॥ यतः—
" अयं निजः परो वेति गणना लघुचेतसाम् । उदारचरितानां तु वसुधैव कुटुम्बकम् ॥ २६८ ॥
विपदि परेषां सन्तः सविशेषमेव दधति सौजन्यम् । ग्रीष्मे भवन्ति तरवो घनकोमलपल्लवच्छन्नाः ॥ २६९ ॥
नालिकेरसमाकारा दृश्यन्ते केपि सज्जनाः । अन्ये तु बदराकारा बहिरेव मनोरमाः ॥ " २७० ॥
वैद्योऽभाषीत्कुतः स्थानात्किमर्थं कुत्र जग्मिवान् । इत्युक्ते च नरः प्राह-चन्तीनामपुरात्किल ॥ २७१ ॥
श्रीरश्रेष्ठिसुतो भीमाऽभिधोऽहं पितरं निजम् । मानयित्वाऽब्धिमार्गेण निरसार्थं रमाकृते ॥ २७२ ॥
भग्नयानोऽम्बुधौ लब्ध फलको दैवयोगतः । कल्लोलनिचयैः कूलमहं प्रापं च कष्टतः २७३ ॥ यतः—
" ब्रह्मा येन कुलालवन्नियमितो ब्रह्माण्डभाण्डोदरे॰ ॥" २७४ ॥ इत्यादि।
वैद्यः प्राह महाभाग ! दुःखं कार्यं त्वया नहि । तिष्ठ त्वमत्र मत्पार्श्वे सुखं कालं नयाधुना ॥ २७५ ॥
चिराच्चिरविलम्बेना चन्तीपुर्यामहं द्रुतम् । त्वमेव च मया सार्धं-मागच्छेस्तत्र गच्छता ॥ २७६ ॥
ततो बान्धववद्भित्य वैद्यभूपः सुभक्तितः । सदन्न-पान-वस्त्राद्यैः पोषयामास तं भृशम् ॥ २७७ ॥ यतः—
"उपकर्तुं प्रियं वक्तुं कर्तुं स्नेहमकृत्रिमम् । सुजनानां स्वभावोऽयं केनेन्दुः शिशिरीकृतः" ॥ २७८ ॥

१ नागाते॰ ग ।

वैद्यः पप्रच्छ भो भीमा–वन्त्यां कोऽस्ति नरेश्वरः । भीमोऽवग् विक्रमादित्यः पपाल पृथिवीं नयात् ॥ २७९ ॥
तत्र कोऽपि समागत्य तस्करो मेदिनीपतेः । भूषणानि गृहीत्वाऽगात् चटितस्तस्करो न हि ॥ २८० ॥
अत्रान्तरे ततः पुर्यां ज्ञात्वा वस्तूनि भूरिशः । लक्ष्म्यर्थं वाहनेनाऽहं चलितोऽम्भोधिवर्त्मना ॥ २८१ ॥
वैद्यभूपो जगौ तत्र विक्रमार्कप्रजापतेः । सुतोऽहं निर्गतस्तस्मात् अवन्तीनगरात्पुरा ॥ २८२ ॥
दैवयोगादिहेदानी–मागमं भूतले भ्रमन् । भूपतेस्तनयामस्य पर्यणैषमहं पुनः ॥ २८३ ॥
स्वोपार्जितश्रिया यान-पात्राणि पञ्चविंशतिम् । भृत्वा क्रयाणकैर्नाना–प्रकारैर्बहुमूल्यकैः ॥ २८४ ॥
पुरीं विचलिषुः सौवां प्रति वैद्यपतिः प्रियाम् । प्रेषयामास भूपान्ते मुत्कलापयितुं तदा ॥ २८५ ॥ [ युग्मम् ]
वैद्यभूपप्रिया भूप–पार्श्वे गत्वा जगावदः । तातावन्तीपुरस्वामि–विक्रमादित्यनन्दनः ॥ २८६ ॥
चलिष्यति पतिर्मेऽद्य पित्रोश्च मिलनोत्सुकः । तेनाऽहं त्वधुना मुत्क–लापयितुं समागमम् ॥ २८७ ॥ [ युग्मम् ]
जामातुर्ज्ञातपित्रादि–सम्बन्धो ध्यातवान्नृपः । चक्रे मया भृशं तस्य मुग्धबुद्ध्याऽवहीलनम् ॥ २८८ ॥
ममाऽपि नरकं मुक्त्वा विद्यते स्थानकं न हि । ईदृक्सुजनधिकारकरणान्निश्चितं भृशम् ॥ २८९ ॥
रिपुराज्यार्पणाच्चक्रे–ऽवज्ञा तस्य मया खलु । जामात्रा कर्हिचित्क्षेप विकारो दर्शितो मनाग् ॥ २९० ॥ यतः–
"सत्पक्षा ऋजवः शुद्धाः सफलाः गुणसेविनः । तुल्यैरपि गुणैश्चित्रं सन्तः सन्तः शराः शराः ॥ २९१ ॥

१. प्रयास्ति. ग ।

ततो जामातरं भूपः समानीय निजालये । प्रोवाचेह मया चक्रे-ऽपराधास्तव भूरिशः ॥ २९२ ॥
संतव्य भवता सम्यग् अधमस्योपरि स्फुटम् । राज्यमङ्गीकुरुष्वेदं जामातः! साम्प्रतं मम ॥ २९३ ॥
वैद्यभूपो जगौ कार्यं न मे राज्येन तेऽधुना । मिलनेच्छा भृशं माता-पित्रोरेव महीपते ! ॥ २९४ ॥ यतः—
"पुनाति त्रायते चैव कुलं सर्वं योऽत्र शोकतः । एतत्पुत्रस्य पुत्रत्वं प्रवदन्ति मनीषिणः ॥ २९५ ॥
तीर्थेभ्यः स्नानदानाद्यैः पुण्यमेव हि लभ्यते । पितृभ्यस्तु निरायासं त्रिवर्गस्य तु सम्भवः ॥ २९६ ॥
असार्थमार्थेन तीर्थ-मदेहद्रोहणं तपः । अनम्भः सम्भवं स्नानं मातुश्चरणचर्चनम् ॥ २९७ ॥
जीयाल्लोकोत्तरः कोऽपि जननीस्नेहपादपः । निर्बीजमूलवृक्षोऽपि यः सदैव फलेग्रहिः ॥ २९८ ॥
ततो भूपतिना वैद्य-भूपाय प्रददे तदा । मुक्ताफलं मणिं स्वर्णं-तुरङ्गमव्रजो बहु ॥ २९९ ॥
श्वशुरादिपदाम्भोजं नत्वा वैद्यनृपस्तदा । चचालाम्बुधिमार्गेण प्रियायुक्तः प्रमोदितः ॥ ३०० ॥
कनकश्रीवपूरूपं दृष्ट्वा भीमोऽन्यदा मुदा । मोहितस्तां छलाद्धर्तुं- मभूच्चिन्तातुरो भृशम् ॥ ३०१ ॥ यत —
"अवखाण सणी(मणी)कम्माण मोहणी०                    ॥" ३०२ ॥
अर्थातुराणां न सुहृन्न बन्धुः,क्षुधातुराणां न वपुर्न तेजः।कामातुराणां न भयं न लज्जा,चिन्तातुराणां न सुखं न निद्रा॥३०३॥
यानप्रान्ते स्थितोऽन्येद्यु, भीमः प्राहेति फैतवात् । भो वैद्यभूपते ! पश्य कौतुकं वारिधाविनः ॥ ३०४ ॥
षड्मुखो व्रजत्येष मत्स्यः स्निग्धतनुच्छविः । इतश्चाष्टाननो याति मकरोऽरुणदीप्तिमान् ॥ ३०५ ॥

श्रुत्वैतदुद्यतो यावद् वैद्यभूपोऽजनि द्रुतम् । तावद् भीमेन दुष्टेन बलात्क्षिप्तः पयोनिधौ ॥ ३०६ ॥
मकरेणाम्बुधौ वैद्यो भूपतिर्गलितः पतन् । कल्लोलप्रेरितः सोऽपि वार्धिकूलमुपागमत् ॥ ३०७ ॥
निश्चुकोपुर्बहिर्वार्द्धे--र्मकरं मैनिकास्तदा । छिन्ने तस्योदरे चैको निस्ससार नरोऽनघः ॥ ३०८ ॥ यतः—
"वने रणे शत्रु-जला-ग्निमध्ये महार्णवे पर्वतमस्तके वा । सुप्तं प्रमत्तं विषमस्थितं वा रक्षन्ति पुण्यानि पुराकृतानि" ॥ ३०९ ॥
दध्यौ वैद्यो विधिर्नूनं बलवान् विद्यते भृशम् । आदौ लात्वेक्षणी दत्ते भूयः सच्चूर्णयोगतः ॥ ३१० ॥
ततो राजसुता दत्ता विधिना कमला पुनः । पातितो वारिधौ भूयः कर्षितो वारिधेः पुनः ॥ ३११ ॥
वैद्यः पुनर्निजं भाग्यं द्रष्टुं ग्रामादिषु व्रजन् । एत्यावन्तीपुरीपार्श्वे ध्यातवानिति मानसे ॥ ३१२ ॥
मिलिष्यामि कथं माता–पित्रोरेवंविधोऽधुना । यतो न शोभते लक्ष्मीं विना कुत्र पुमान् मनाग् ॥ ३१३ ॥ यतः—
"यस्यास्ति वित्तं स नरः कुलीनः स पण्डितः स श्रुतवान् गुणज्ञः । स एव वक्ता स च माननीयः सर्वे गुणाः काञ्चनमाश्रयन्ति"
वाहनानि मदीयानि यावन्नेष्यन्ति तावता । कस्यचित्सदने स्थित्वा कालं नेष्याम्यहं[1] किल ॥ ३१५ ॥
ध्यात्वेति विक्रमादित्य--सूनुश्चेतसि बुद्धिमान् । मालिकस्य गृहेऽभ्येत्य तस्थौ यानागमेच्छुकः ॥ ३१६ ॥
इतो भीमश्छलात्प्राह हा हा किमधुनाऽजनि । मत्स्वामिनोऽम्बुधौ पातो- ऽभवन्मत्स्यविलोकनात् ॥ ३१७ ॥
भो लोका ! धावताह्वाय प्रविशन्तु पयोनिधौ । कर्षयितुं द्रुतं वार्द्धेः स्वामिनं पतितं मम ॥ ३१८ ॥

---

१. तानि च । तावदत्र स्थितः कालं नेष्यामि स्म स्वयं सुखम् । ग.

अहं कथं भविष्यामि साम्प्रतं स्वामिनं विना । इत्यादि स भृशं रोदं रोदमन्यानरोदयत् ॥ ३१९ ॥ यत —
" लोभमूलानि पापानि रसमूलाश्च व्याधयः । स्नेहमूलानि दुःखानि त्रीणि त्यक्त्वा सुखी भवेत् ॥" ३२० ॥
लोभेन कुरुते मायां तथा जीवो विमूढधीः । यथा न तत्र जानीते क्वापि स्वधिया पुनः ॥ ३२१ ॥
"नयणिहिं रोइ मणि हसइ जण जाणइ सव सच्चु । वेसा दुज्जण तं करइ जं कट्टइ करवत्तु ॥ ३२२ ॥
एगे कुणंति छिद्दं जाइविसुद्धेऽपि निम्मले रयणे । अन्ने महाणुभावा गुणेहिं तं चेव पूरन्ति ॥ ३२३ ॥
अनुहरतः खलसुजना-वग्रिमपाश्चात्यभागयोः सूच्याः । एकः कुरुते छिद्रं गुणवानन्यस्तु पिदधाति ॥" ३२४ ॥
श्रुत्वाऽथो पतिं कान्तं कनकश्री प्रियाऽपि च । रोदं रोदं जनान् सर्वान् रोदयामास तत्क्षणम् ॥ ३२५ ॥
लोकाः प्रोचुः कथं भीम ! रोदिषि त्वं पुनः पुनः । स्वकर्मतो यतः केऽपि छुट्यन्ते न सुरा अपि ॥ ३२६ ॥
" कृतकर्मक्षयो नास्ति० ॥ ३२७ ॥
सम्पदि यस्य न हर्षो विपदि विषादो रणे च धीरत्वम् । तं भुवनत्रयतिलकं जनयति जननी सुतं विरलम् ॥ ३२८ ॥
एवं मायां क्षणं कृत्वा भीमोऽवग् मानवान् प्रति । चाल्यतां वाहनं सद्यो गम्यते आत्मनः पुरे ॥ ३२८ ॥
द्रव्यार्पणाज्जनान् सर्वान् सन्मान्य भीमनैगमः । गत्वा रहः कनकश्री-पार्श्वे प्राहेति दुष्टधीः ॥ ३३० ॥
दुःखं मनाक् त्वया कार्यं नो हि भामिनि ! मानसे । अहं च पूरयिष्यामि वाञ्छितं तव सततम् ॥ ३३१ ॥
श्रुत्वैतं मूर्छिता शीतो-पचाराच्च सचेतना । स्वर्णश्रीः प्राह पत्येव न्यस्यसि त्वं मनाग् मम ॥ ३३२ ॥

तदा मया विधातव्यः प्राणत्यागोऽचिरात् ध्रुवम् । अस्मिन् भवे स एवास्तु पतिर्वा ज्वलनो मम ॥ ३३३ ॥
करिष्यसि बलाच्चेदेवं तदाऽनर्थस्तवागतः । नो चेत्सर्वा भविष्यन्ति यानपात्रश्रियश्च ते ॥ ३३४ ॥
भीमो दध्यौ पुरे स्वीये निरीक्ष्य मद् गृहं वरम् । कनकश्रीरियं सर्वं मदुक्तं मानयिष्यति ॥ ३३५ ॥
विचिन्त्येति जगौ भीमो भवत्योक्तं भविष्यति । ततः क्रमात्तटं प्राप्य वस्तु सर्वमतीतरत् ॥ ३३६ ॥
भीमः क्रयाणकं सर्वं शकटैर्भूरिभिः क्रमात् । अवन्त्यां स्वगृहे सद्य आनयामास रङ्गतः ॥ ३३७ ॥
एकस्मिन् पृथगावासे वनितां कनकश्रियम् । प्रियां कर्तुमना भीमः स्थापयामास हर्षितः ॥ ३३८ ॥
आनीतां कमलां वह्नीं कन्यामेकां च सूनुना । निरीक्ष्य मुमुदे भीम-जनकोऽर्कमिवाम्बुजम् ॥ ३३९ ॥
कमलामोहितोऽत्यन्त-मुपायं कन्यकां च ताम् । वरीतुं तनुते भीमः कृत्याकृत्यविवर्जितः ॥ ३४० ॥
" न पश्यति हि जात्यन्धः कामान्धो नैव पश्यति । न पश्यति मदोन्मत्तः स्वार्थी दोषं न पश्यति ॥ ३४१ ॥
विकलयति कलाकुशलं हसति शुचिं पण्डितं विडम्बयति । अधरयति धीरपुरुषं क्षणेन मकरध्वजो देवः ॥" ३४२ ॥
इतः शुभमतीरूप-वत्यौ भूमिपतेः स्नुषे । विज्ञाय रमणं दूर-गतं दुःखेन पूरिते ॥ ३४३ ॥
याचेते मेदिनीनाथं सततं काष्ठभक्षणम् । राजा जगौ कियत्कालं प्रतीक्षेथां स्नुषेऽनघे ॥ ३४४ ॥
कदाचित् तस्य पुत्रस्य ममैव सुकृतोदयात् । आगमो वा श्रुतिः सम्यग् ज्ञायते कस्यचिन्मुखात् ॥ ३४५ ॥

---

१. भयादेवं वचस्तव । क.  २. कनकश्रीमृगेक्षणाम् । ग ।

एवं पुन' पुन' प्रोक्त्वा भूभुजा स्थापिते स्नुषे । विनयेन महीपालं याचेते काष्ठभक्षणम् ॥ ३४६ ॥
इतो भ्रान्त्वा भुव सोम-दत्तोऽभ्येत्य पुरीं निजाम् । श्रीविक्रमचरित्रस्य स्वरूपमुक्तवांस्तदा ॥ ३४७ ॥
पुत्रस्वरूपमाकर्ण्य विक्रमार्कोऽतिदु'खितः । ततो दूरागतान् लोकान् सूनोः शुद्धिं च पृच्छति ॥ ३४८ ॥
यदा महीपति' सूनोः शुद्धिं सम्यग् न वेत्ति च । तदा दध्यौ ममेदानीं किमु प्राणाः सुत विना ॥ ३४९ ॥
ततो मन्त्रीश्वरै' सार्धं विचार्यावनिनायकः । एकमाकार्य दैवज्ञ पप्रच्छ तनयागमम् ॥ ३५० ॥
नैमित्तिको जगौ राजन् ! लग्न वक्तीति साम्प्रतम् । अद्य कल्ये परेद्युर्वा सज्जनेशः समेष्यति ॥ ३५१ ॥
आगतोऽस्त्यथवा पूर्वमस्या पुर्यां तवात्मज । तेन दु.ख न कर्तव्य भवता साम्प्रतम् मनाक् ॥३५२॥
ततो हृष्टो महीपाल आकार्य सचिवान् द्रुतम् । वादयामास पटह सर्वतो नगरे इति ॥ ३५३ ॥
यः कश्चिद् भूपपुत्रस्या गमन कथयिष्यति । तस्य राज्यार्धमुर्वीशः प्रदास्यति ध्रुवं द्रुतम् ॥ ३५४ ॥
एवं मध्येपुर स्थाने स्थाने भूपतिसेवकैः । कार्यते पटहोद्घोषो-ऽभितो भूपनिदेशतः ॥ ३५५ ॥
इतो विक्रममार्तण्ड-पुत्र' प्रपच्छ मालिकाम् । काऽस्ति वार्ता पुरीमध्ये राजा किं कुरुतेऽधुना । ३५६ ॥
मालिकाऽवग् महीशेन पुत्रशुद्धिकृतेऽधुना । वाद्यते पटहो मध्ये-नगरं निजसेवकैः ॥ ३५७ ॥
धीरश्रेष्ठिसुतो भीम. परेद्युर्दूरदेशतः । अनैषीत् स्वर्णरत्नादि वस्तूनि भूरिशोऽत्र च ॥ ३५८ ॥
एकां दिव्यतनु नारी- मानीयात्र मनोहराम् । स्वगृहोपान्तसदने स्थापयामास सम्प्रति ॥ ३५९ ।

वैद्योऽवग् मालिके ! तस्याः पार्श्वे त्वं किं गमिष्यसि । मालिका माह सर्वत्रा--स्मादृशां विद्यते गतिः ॥ ३६० ॥ यतः—
" वणिजां पुरनारीणां मालिकानां मनस्विनाम् । चराणां तस्कराणां च सर्वत्र विद्यते गतिः ॥" ३६१ ॥
३ ततः श्लोकान् वरान् पुष्प--चरणके रहो नरः । लिखित्वा प्रददौ तस्यै मालिकायै मुदा तदा ॥ ३६२ ॥
स च माह स्त्रियास्तस्या देहि भो मालिके रहः । सा च यद्वक्ति तच्छ्रुत्वा समागम्यमिह त्वया ॥ ३६३ ॥
ततः सा मालिका तत्र गत्वा पुष्पचरणकम् । यावत्तस्यै ददौ तावत् श्लोकान् वाचयतीति सा ॥ ३६४ ॥
६ चूर्णेन यो व्यधाद् वैद्यः पश्यन्तीं कनकश्रियम् । हेलया विद्विषोऽशेषान् वश्यकार्षीच्च यः पुनः ॥ ३६५ ॥
य आत्मीयं जगौ वृत्त--मपूर्वं भूपतेः पुरः । मयाणावसरे पत्नी--पार्श्वात्सम्यगचीकथत् ॥ ३६६ ॥
दिव्यस्वर्ण-मणि-रौप्य-वसुभिः प्राग् भृतानि च । पूरयामास चाम्भोधौ यानानि पञ्चविंशतिम् ॥ ३६७ ॥
९ चलत्सु यानपात्रेषु यः पपात पयोनिधौ । स त्वदीयपतिर्दैव--योगादब्धेश्च निर्गतः ॥ ३६८ ॥
अस्यां पुरि गृहे धीर--मालिकस्यास्ति सम्प्रति । स्थितः सन्नयते कालं सुखेनैव पतिस्तव ॥ ३६९ ॥
स्पृष्ट्वापटहमज्ञाय मामत्रस्थं प्रियेऽधुना । निवेदय महीशस्य पुरः पट्यन्तरस्थिता ॥ ३७० ॥ [ षड्भिः कुलकम् ]

१. ततः पुमान् जगौ श्लोकान्येतानि मालिके पुनः । दत्वा तस्याः स्त्रियः पश्चाद्यागच्छ त्वरया रहः ॥ ग. ।
२ चतुःश्लोकैश्च ग्रथितं रहस्तस्यै ददौ तदा ॥ सन्मान्य मालिकां पश्चात् संप्रेक्ष्य कनकश्रिया । पौष्पं चरणकं वर्यं वीक्ष्य प्रमुदितं तया ॥ लिखितान्यक्षराण्येक्ष्य चञ्चत्पुष्पचरणके । श्लोकानि वाचयामास स कनकश्रीरहस्तदा ॥ तथाहि--
इति ग पुस्तकेऽधिकः पाठः ॥

श्लोकज्ञातनिजस्वामि-स्वरूपा कनकेन्दिरा । सन्मान्य मालिकां पश्चात्प्रेषयामास तत्क्षणात् ॥ ३७१ ॥
मालिकौक:स्थितं कान्तं विज्ञाय कनकेन्दिरा । परस्पर्शं पटहं वाद्य-मानं भूपतिसेवकैः ॥ ३७२ ॥
पटहस्पर्शमाकर्ण्य गत्वा श्रीमद्गृहे नृपः । पटयन्तरस्थितां कन्यां पप्रच्छ कनकश्रियम् ॥ ३७३ ॥
कुत्र स्थाने सुतो मे स वत्से ! तिष्ठति सम्प्रति । स्वरूपं मूलतः पत्युः मह्यं त्वं कथितुं च सा ॥ ३७४ ॥
अवन्तीनिर्गमप्राप्ति-पर्यन्तं स्वपतेस्तदा । वृत्तान्तं कथयामास कनकश्रीर्नृपाग्रतः ॥ ३७५ ॥
स्वरूपं स्वीयपुत्रस्य कनकश्रीमुखात् तदा । पटयन्तरस्थितं श्रुत्वा दध्याविति महीपतिः ॥ ३७६ ॥
किमसौ विद्यते विद्या-धरी देवाङ्गनाऽथवा । साक्षाज्ज्ञानवती किंवा भारती वा समागता ॥ ३७७ ॥
ममोपरि कृपां कृत्वा काऽपि ज्ञानवती वशा । आगता कथितुं सूनोः स्वरूपं सुखहेतुकम् ॥ ३७८ ॥
श्रीविक्रमादित्यभूपालो ज्ञातपुत्रस्थितिस्तदा । उत्थाय मालिकावास-द्वारदेशमगात्तदा ॥ ३७९ ॥
श्रीविक्रमचरित्रोऽथ दृष्ट्वा तातं समागतम् । आगत्य सम्मुखं भक्त्याऽ-नमत् पादाम्बुजं पितुः ॥ ३८० ॥
" ते पुत्रा ये पितुर्भक्ताः स पिता यस्तु पोषकः । तन्मित्रं यत्र विश्वासः सा भार्या यत्र निर्वृतिः ॥ ३८१ ॥
उपाध्यायाद् दशाचार्यं आचार्याणां शतं पिता । सहस्रं तु पितुर्माता गौरवेणातिरिच्यते ॥ ३८२ ॥
आस्तन्यपानाज्जननी पशूना-मादारलम्भावधि चाधमानाम् । आगेहकर्मावधि मध्यमाना-माजीवितात्तीर्थमिवोत्तमानाम् "॥
ततः श्री विक्रमादित्य-भूपतिश्चक्रदुत्सवम् । अनैषीद् नन्दनं सौध-मन्दिरं मुदिताशय ॥ ३८४ ॥

आदौ मातृपदाम्भोजं ननामानघमानसः । हर्षश्च श्रीमतीरूप–वत्योः कान्तेक्षणादभूत् ॥ ३८५ ॥

" रविं रथाङ्गाः शशिनं चकोरा मेघं मयूरा विजयं च शूराः।सती पतिं वारिधिरिन्दुमम्बा पुत्रं निरीक्ष्येह मुदं वितेनुः"३८६

भूपः प्राहाङ्गजेदानीं राज्यार्धं दास्यते कथम् । तस्याः स्त्रिया यया प्रोक्ता स्थितिस्ते मत्पुरः स्फुटम् ॥ ३८७ ॥

पुत्रो जगौ ततः सर्वं स्वरूपमात्मनः पितुः । सुतवाक्यं निशम्यैतद् भूपः प्राहाङ्गजं प्रति ॥ ३८८ ॥

मारयित्वा द्रुतं भीमं सर्वामस्य श्रियं पुनः । ग्रहीष्यामि यतो दुष्टः पापिष्ठोऽयं च निर्दयः ॥ ३८९ ॥

भीमस्य सदने मुद्रां दापयित्वा महीपतिः । बद्ध्वा च रज्जुभिस्तं प्राक् कशाघातैरताडयत् ॥ ३९० ॥

" दौर्भाग्यं प्रेष्यतां दास्य--मङ्गच्छेदं दरिद्रताम् । अदत्तात्तफलं ज्ञात्वा स्थूलस्तेयं विवर्जयेत् ॥ ३९१ ॥

चौर्यपापद्रुमस्येह वधबन्धादिकं फलम् । जायते परलोके तु फलं नरकवेदना ॥ ३९२ ॥

ये द्रोहं कुर्वतेऽन्येषां विश्वास्यैव तनूमताम् । लभन्ते ते महादुःख--मिहामुत्र निरन्तरम् ॥ ३९३ ॥

प्राणसंदेहजननं परमं वैरकारणम् । लोकद्वयविरुद्धं च परस्त्रीगमनं त्यजेत् ॥ ३९४ ॥

सर्वस्वहरणं बन्धं शरीरा० ॥ ३९५ ॥

श्रीविक्रमचरित्रोऽवक् तातामुं मुञ्च मा तुद । अनेन श्रीप्रिये अत्र समानीते सुखं मम ॥ ३९६ ॥

उक्त्वेति विक्रमादित्य--सुतो भीमं च बन्धनात् । छोटयामास सन्मानं कारयामास भूभुजा ॥ ३९७ ॥

---

१ श्रुत्वा भूमिपती रक्ते-क्षणः प्राह सुतं प्रति ॥ ग ।

आनिनाय स्नुषां सर्व--वाहनाना क्रयाणकम् । निजावास महीपाल--श्चाकस्सवपुरस्सरम् ॥ ३९८ ॥
सूनोर्ऋद्धिं चरित्र वा पूर्वं वीक्ष्य महीपतिः । पुरीमध्येऽभितो गीत- नृत्योत्सवमचीकरत् ॥ ३९९ ॥
श्रीविक्रमचरित्रोऽथ पत्नीत्रययुतस्तदा । ज्ञानदर्शनचारित्रश्री--युग् साधुरिवाबभौ ॥ ४०० ॥
सोमदन्त तदा तत्रा--कार्य श्रीविक्रमाङ्गज. । पितु पार्श्वात् श्रिय बह्वीं दापयामास रङ्गतः ॥ ४०१ ॥
न मनाग् सोमदन्ते तु श्रीविक्रमार्कनन्दन । द्वेषं चक्रे यतः सन्ति उत्तमा परवत्सला' ॥ ४०२ ॥
ततो विक्रममार्तण्डो गुणवत्पुत्रसयुत । पृथिवीं पालयामास न्यायमार्गेण नित्यशः ॥ ४०३ ॥
ध्वजिका- तोरणप्रौढ--गीत--नृत्या र्चनादिभिः । प्रभावनां महीपालः कारयामास रङ्गतः ॥ ४०४ ॥
उद्योगिनं पुरुषसिंहमुपैति लक्ष्मी--र्दैवं च दैवमिति कापुरुषा वदन्ति ।
दैव निहत्य कुरु पौरुषमात्मशक्त्या, यत्ने कृते यदि न सिध्यति कोऽत्र दोषः ॥ ४०५ ॥
श्रीविक्रमचरित्रोऽथ पूर्ववत्सुहृदं पुनः । सोमदन्त तदा सद्यो मानयामास रङ्गतः ॥ ४०६ ॥
स्वोपार्जितश्रिय पुण्य--स्थानकेषु निरन्तरम् । श्रीविक्रमादित्यभूपालः सफलीकुरुते स्म सः ॥ ४०७ ॥

॥ इति श्री'तपा गच्छनायक-श्रीसोमसुन्दरसूरिपट्टालकरण-परमगुरुश्रीमुनिसुन्दरसूरिशिष्य-पण्डितश्रीशुभशीलगणिविरचिते
श्रीविक्रमादित्यविक्रमचरित्रे श्रीविक्रमचरित्रकनकश्रीनाम षष्ठ सर्ग समाप्त ॥

## अथ सप्तमः सर्गः ।

अथावधूतवेषेण भ्रमन् देशेषु भूरिषु । द्वादशवर्षपर्यन्ते सिद्धसेनदिवाकरः ॥ १ ॥

मिथ्यात्वग्रसितं भूपं विक्रमार्कं कुयोगतः आकर्ण्य तत्प्रबोधाय ययौ मालवनिवृति ॥ २ ॥ [ युग्मम् ]

अवधूतस्य वेषेण सिद्धसेनो गुरूत्तमः । उज्जयिन्यां समायातः प्रबोधाय महीपतेः ॥ ३ ॥

गत्वेश्वरगृहे लिङ्गा--ऽभिमुखौ चरणौ निजौ । कृत्वा सूरीश्वरः सुप्तः प्रबोधाय नरेशितुः ॥ ४ ॥

दृष्ट्वा तथास्थितं तं च प्राहेति देवपूजकः । उत्तिष्ठ भो पुमन् ! नैवं सुप्यते देवसम्मुखम् ॥ ५ ॥

एवं पुनः पुनः प्रोक्ते यावन्नोत्तिष्ठति स्म सः । तावद् भूमिपतेः पार्श्वं गत्वा देवार्चको जगौ ॥ ६ ॥

स्वामिन्नद्य पुमानेको--ऽवधूतवेषधारकः । लिङ्गस्याभिमुखं पादौ दत्त्वा सुप्तोऽतिनिर्घृणः ॥ ७ ॥

राजाऽवग् वचनेनैवं समुत्तिष्ठति नो यदि । कम्बाभिश्च तदाहत्य कर्त्तव्यो दूरतस्त्वया ॥ ८ ॥

अवधूतं यथा हन्ति कम्बाभिर्भूपसेवकः । अन्तःपुरं तदा बाढं कम्बाभिस्ताड्यतेऽभितः ॥ ९ ॥

शुद्धान्तस्य तदा पीडां ज्ञात्वा भूमिपतिर्भृशम् । महं(हा)कालालयेऽभ्येत्या--वधूतं तं जगाविति ॥ १० ॥

अवधूत ! स्तुहि त्वं च महेशं शिवशर्मदम् । देवो हि स्तूयते स्तोत्रै--रवज्ञा क्रियते न हि ॥ ११ ॥

सूरिणोक्तं महीपाल ! महादेवः स्तुतिं मम । सहते न मनाग् भूपः प्राह देवः सहिष्यति ॥ १२ ॥

सूरिः प्राह मम स्तुत्या विघ्नमस्य सुधाभुजः । भविष्यति तदा दोषो देयो न भवता मनाग् ॥ १३ ॥

स्तुहीति भूभुजा प्रोक्ते सूरिणोत्थाय तत्क्षणात् । स्तुतो जिनो वीरो द्वात्रिंशता द्वात्रिंशिकादिभिः[1] ॥ १४ ॥
प्रादुर्भवति नो देवो महावीरो जिनेश्वरः । तेन श्रीपार्श्वनाथस्य समारब्धा स्तुतिस्तदा ॥ १५ ॥
कल्याणमन्दिरस्तोत्रे 'क्रोधस्त्वये'ति गर्भितम् । काव्यं यावद् व्यधात् सूरि–स्तावल्लिङ्गभिदाऽभवत्॥१६॥केचिदाचार्या वदन्ति
स्वयम्भुव भूतसहस्रनेत्रमनेकमेकाक्षरभावलिंगम् । अव्यक्तमव्याहतविश्वलोक मनादिमध्यान्तमपुण्यपापम् ॥ १७ ॥
इत्यादि प्रथमे काव्ये स्तोत्रस्य जल्पिते सति । लिङ्गं भित्त्वा जिनः पार्श्वो निर्जगामामरस्तुत ॥ १८॥
बिम्बं श्रीपार्श्वनाथस्य निर्गत वीक्ष्य सूरिराट् । प्राहाय सहते देवो मदीयां स्तुतिमद्भुताम् ॥ १९ ॥
राज्ञोचत भगवन् कस्त्वं कोऽसौ देवो विनिर्गतः । अवधूतो जगौ सूरि–मुख्यस्य वृद्धवादिनः ॥ २० ॥
सिद्धसेनाभिध[2] शिष्यः कारणान्निर्गतो बहिः । आगतोऽस्मिन् पुरे पृथ्व्यां भ्रमन् देशेषु भूरिशः ॥ २१ ॥ [युग्मम्]
भिक्षुर्दिदृक्षुरायात–स्तिष्ठति द्वारि वारितः । हस्तन्यस्तचतुःश्लोकः किंवाऽऽगच्छतु गच्छतु ॥ २२ ॥
इत्यादि विशदश्लोक–चतुष्टयविधानत । पूर्वं मया भवानत्र वर्णितो मेदिनीपते ! ॥ २३ ॥
धरणेन्द्रादिगीर्वाण नायकसततिसेवितम् । बिम्बं श्रीपार्श्वनाथस्य निर्गत वसुधातलात् ॥ २४ ॥
श्रुत्वैतद् विक्रमादित्यः प्राह चित्ते चमत्कृतः । कथमस्मिन्मरुद्गेहे निर्ययौ पार्श्वसर्ववित् ॥ २५ ॥
ततो भूपप्रबोधाय सिद्धसेनदिवाकरः । प्राह भूपास्य सम्बन्ध प्रासादस्य शृणु स्फुटम् ॥ २६ ॥

---

१. किं चेदं दृश्यतेऽद्भुतम् ग । २. चिरान् श्रीपार्श्वनाथोऽय निर्गतो. क ।

पूर्वमस्यामवन्त्यां श्री–भद्रश्रेष्ठी धनी कृती । भद्राऽभूद् गेहिनी तस्य शीलादिगुणशालिनी ॥ २७ ॥
रूपाञ्जितसुरोऽवन्ती–सुकुमालाभिधः सुतः । द्वात्रिंशद्गृहिणीभोगः शालिभद्र इवाभवत् ॥ ३२८ ॥
आर्यासुहस्तिसूरीशगण्यमानां वरध्वनि । शुश्राव नलिनीगुल्म–विमानस्थितिमादरात् ॥ २९ ॥
ऊहापोहं करन् भूयो जातजातिस्मृतिस्तदा । ज्ञात्वा पूर्वभवं स्वीयं गत्वा पार्श्वे गुरोर्जगौ ॥ ३० ॥
यूयं किं नलिनीगुल्म–विमानादागता इह । गुरुः प्रोवाच शास्त्रेण ज्ञायते तत्स्थितिर्मनाग् ॥ ३१ ॥
भद्रापुत्रो जगौ स्थातुं न तत्सौख्यं विना क्षमः । तेन दीक्षां ममेदानीं यूयं ददत शीघ्रतः ॥ ३२ ॥
गुरुः प्रोवाच नो दातुं शक्यते तेऽधुना व्रतम् । आपृच्छ्य पितरौ दीक्षां गृहाण श्रेष्ठिनन्दन ! ॥ ३३ ॥
ततो गत्वा बहिर्दीक्षां ललौ भद्रासुतः स्वयम् । कायोत्सर्गे स्थितः स्वर्ग–ध्यानं कुर्वंश्च योगिवत् ॥ ३४ ॥
तदा तत्रागता पूर्व–भवपत्नी शिवा वने । तं दृष्ट्वा जातरुट् बाढमुपसर्गं व्यधात् तदा ॥ ३५ ॥
शुभध्यानेन मृत्वा स श्रेष्ठिपुत्रस्तदा निशि । बभूव नलिनीगुल्म–विमाने निर्जरोऽनघः ॥ ३६ ॥
प्रातः पृष्ट्वा गुरुं बाह्यो–द्याने गत्वा च श्रेष्ठिराट् । मृतं दृष्ट्वा सुतं वह्नि–संस्कारं चकृवांस्तदा ॥ ३७ ॥
श्रेष्ठ्यपि नलिनीगुल्म–विमाने गमनं प्रगे । सूनोः श्रुत्वा गुरोः पार्श्वे तत्याज शोकमात्मनः ॥ ३८ ॥
तस्मिन् स्थाने महच्चैत्यं पार्श्वनाथजिनेशितुः । मनोज्ञं कारयामास भद्रश्रेष्ठी धनव्ययात् ॥ ३९ ॥
तस्याऽजनि महं(हा)कालनामेति विश्रुतं भुवि । कालक्रमाद् द्विजैर्लिंगं स्थापितं पार्वतीपतेः ॥ ४० ॥

नीरागोऽसौ जिनो देवो ददते पदमव्ययम् । सुरासुरनराभीष्ट-पदवीमपि सुन्दराम् ॥ ४१ ॥ यतः-
सर्वज्ञो जितरागादि-दोषस्त्रैलोक्यपूजितः । यथास्थितार्थवादी च देवोऽर्हन् परमेश्वर. ॥ ४२ ॥
ध्यातव्योऽयमुपास्योऽयं० ॥ ४३ ॥ ये स्त्री शस्त्राक्षसूत्रादि० ॥ ४४ ॥
नाट्या-ट्टहाससङ्गी० ॥ ४५ ॥ महाव्रतधरा धीरा० ॥ ४६ ॥
सर्वाभिलाषिण सर्वभोजिनः० ॥ ४७ ॥ परिग्रहारंभमग्ना० ॥ ४८ ॥
को दण्ड-दण्ड -चक्रा सि-शूल शक्तिधराः सुरा हिंसका अपि हा कष्टं पूज्यन्ते० ॥ ४९ ॥
नस्वर्धुनी न फणिनो न कपालदाम नेन्दोः कला न गिरिजा न जटा न भस्म ।
यत्रान्यदेव च न किंचिदुपास्महे तद्रूप पुराणमुनिशीलितमीश्वरस्य ॥ ५० ॥
स एव योगिनां सेव्यो ह्यर्वाचिनस्तु भोगभाक् । स ध्यायमानो राज्यादि-सुखलुब्धैर्निषेव्यते ॥"५१॥इति मीमांसायाम् ॥
उक्तं च तैश्च स्वयोगशास्त्रे---
" वीतराग स्मरन् योगी वीतरागत्वमश्नुते । सराग ध्यायतस्तस्य सरागत्वं सुनिश्चितम् ॥ ५२ ॥
येन येन हि भावेन युज्यते यन्त्रवाहकः । तेन तन्मयता याति विश्वरूपो मणिर्यथा ॥ ५३ ॥
इत्यादि धर्ममाकर्ण्य सिद्धसेनगुरूदितम् । जिनधर्माश्रित' सोऽभूत् त्यक्त्वा मिथ्यात्वमञ्जसा ॥ ५४ ॥
महाकालाभिधे चैत्ये बिम्ब पार्श्वजिनेशितुः । भूपति स्थापयामास पूजयामास चादरात् ॥ ५५ ॥

देवपूजाकृते ग्राम–सहस्रं नृपतिर्ददौ । सम्यक्त्वं च कलौ श्राद्ध–द्वादशव्रतसंयुतम् ॥ ५६ ॥
सिद्धसेनोऽन्यदा प्राह राजन् चारुफलं श्रियः । दानमेव जिनैः प्रोक्तं श्रेयःसौख्यं यतो भवेत् ॥ ५७ ॥ यतः—
दाणेण फुरइ कित्ती दाणेण य होइ निम्मला कित्ती । दाणावज्जिअहिअओ वइरी वि हु पाणिअं वहइ ॥ ५८ ॥
धणसत्थवाहजम्मे जं घयदाणं कयं सुसाहूणं । तक्कारणमुसभो जिणो तेलुक्कपिआमहो जाओ ॥ ५९ ॥
करुणाइ दिन्नदाणं जम्मंतरगहिअपुण्णकिरिआणं । तित्थयर--चक्किरिद्धिं संपत्तो संतिनाहो वि ॥ ६० ॥
पश्चाद् दत्तं परैर्दत्तं लभ्यते वा न लभ्यते । स्वहस्तेन च यद्दत्तं लभ्यते तत्र संशयः ॥ ६१ ॥
मा मंस्थाः क्षीयते वित्तं दीयमानं कदाचन । कूपारामगवादीनां ददतामेव संपदः ॥ ६२ ॥
" पात्रे धर्मनिबन्धनं तदितरे प्रोद्यद्दयाख्यापकं, मित्रे प्रीतिविवर्धनं रिपुजने वैरापहारक्षमम् ।
भृत्ये भक्तिभरावहं नरपतौ सन्मानपूजाप्रदं । भट्टादौ च यशस्करं वितरणं न क्वाप्यहो निष्फलम् ॥ ६३ ॥
वर्षं यावज्जिनाः सर्वे यथेष्टं दानमन्वहम् । ददते स्वर्णरूप्यादि याचकेभ्यो मुखोदितम् ॥ ६४ ॥
अनृणां पृथिवीं सर्वां कृत्वा च श्रीजिनेश्वराः । दीक्षां लात्वा ततः क्षीण--कर्माणो यान्ति निर्वृतिम् ॥६५॥ यतः----
एका हिरण्णकोडी अट्ठेव य अणूणगा सयसहस्सा । सूरोदयमाइअं दिज्जइ जा पाउरासाओ ॥ ६६ ॥
संघाडग--तिग--चउक्क--चच्चर--चउमुह--महापहपहेसु । दारेसु पुरवराणं रच्छामुहमज्झयारेसु ॥ ६७ ॥
वरवरिआ घोसिज्जइ किमिच्छिअं दिज्जए बहु वि हीअं । सुर--असुर--देव--दाणव--नरिंदमहिआण निक्खमणे ॥६७।

तिन्नेव य कोडिसया अट्ठासीअ च हुंति कोडीओ । असिअ च सयसहस्सा एअ संवच्छरे दि॰न ॥ ६८ ॥
उत्पादिता स्वयमिय यदि तत्तनूजा तातेन वा यदि सदा भगिनी खलु श्रीः ।
यद्यन्यसंगमवती च तदा परस्त्री–स्तत्त्यागबद्धमनसः सुधियस्तनोऽमी ॥ ६९ ॥
दान–शील–तपो–भाव–भेदाद्धर्मं चतुर्विधम् । कुर्वन् भव्यजन॰ श्रेयः सौख्यानि लभतेऽचिरात् ॥ ७० ॥
शंखभूपप्रियारूप–वत्याद्या इव मानवा॰ । दान चतुर्विध शश्वद् ददाना यान्ति निर्वृतिम् ॥ ७१ ॥ तथाहि—
शंखपुर नृपः शंखो भूरिसैन्यो महीपतिः । न्यायमार्गेण पृथिवीं पालयामास संततम् ॥ ७२ ॥ यतः—
" दुष्टस्य दण्ड सुजनस्य पूजा न्यायेन कोशस्य सदैव वृद्धि॰ । अपक्षपातो रिपुराष्ट्रचिन्ता पञ्चैव यज्ञा कथिता नृपाणाम् ॥
यस्तेजस्वी यशस्वी॰"॥ ७४ ॥
लसच्छीलगुणा रूप–वत्याद्या रूपसुन्दरा॰ । सधर्मिण्योऽभवन् सप्त भूपतेः प्राणवल्लभा ॥ ७५ ॥ यतः–
पत्नी प्रेमवती सुतः सविनयो भ्राता गुणालंकृतः, स्निग्धो बन्धुजनः सखाऽतिचतुरो नित्य प्रसन्नः प्रभुः ॥ ७६ ॥
चारोऽन्यदा महीशस्य कोशात्पेटीं मणीभृताम् । आदाय यावता पुर्यां निस्ससार बहिर्निशि ॥ ७७ ॥
तावता धावितैः पृष्टो भृत्यैश्चौरो धृतो दृढम् । आनीतो भूपतेः पार्श्वे ताडितो निर्दयं च तैः ॥ ७८ ॥
नीयमानो नृपादेशाद् वधार्थं सेवकैस्तदा । रूपवत्या वदन् दैन्य मार्गे पृष्टश्च तस्करः ॥ ७९ ॥
अवस्थापतितं चौरं जल्पन्त दीननिस्वनम् । भूमिभुग्गृहिणी रूपवती जातेति दुःखिता ॥ ८० ॥ यतः–

चेतः सान्द्रतरं वचः सुमधुरं दृष्टिः प्रसन्नोज्ज्वला, शक्तिः क्षान्तियुता मतिः श्रितनया श्रीर्दीनदैन्यापहा ।
रूपं शीलयुतं श्रुतं गतमदं स्वामित्वमुत्सेकता-निर्मुक्तं प्रकटान्यहो नवसुधाकुण्डान्यमून्युत्तमे ॥ ८१ ॥
३ गत्वा रूपवती भूपो--पान्तं प्राहेति सद्वयम् । राजन्नयं ममैकाह-स्तस्करो हि समर्प्यताम् ॥ ८२ ॥
येनास्य क्रियते किञ्चि-दुपकारोऽन्नपानतः । श्रावयामि पुनर्द्धर्मं किञ्चिच्छिवसुखप्रदम् ॥ ८३ ॥ यतः-
वरपूजया जिनानां धर्मश्रवणेन सुगुरुसेवनया । शासनमासनयोगैः सृजन्ति सकलं निजं जन्म ॥ ८४ ॥
६ हन्यमानं तदा चौरं मेदिनी नायकप्रिया । आनिनाय मुदा रूप-वती निजनिकेतनम् ॥ ८५ ॥
कारयित्वा ततः स्नानं तस्करः करुणास्पदम् । वरान्नपानतो रूप-वत्या सन्मानितो भृशम् ॥ ८६ ॥
अयं निजः परो वेति गणना लघुचेतसाम् । उदारचरितानां च वसुधैव कुटुम्बकम् ॥ ८७ ॥
९ एवं पृथक् पृथक् षड्भिः पत्नीभिर्भोजनादिना । एकैकं दिवसं स्तेनोऽ-स्यन्तं गौरवितस्तदा ॥ ८८ ॥
एवं स्नानान्नपानेन स्तेनो गौरवितोऽपि सन् । अभूत्कृशवपुर्मृत्यु-भीतेर्बाढं दिने दिने ॥ ८९ ॥
दृष्ट्वा रूपवती चौरं दुर्बलं कृपया जगौ । अस्माभी रक्षितः सप्त दिनानि त्वं मलिम्लुच ॥ ९० ॥
१२ दुर्बलोऽभूः कथं बाढं तत स्तेनो जगावदः । मृत्युभयेन मे देहो जायते दुर्बलो भृशम् ॥ ९१ ॥
अमेध्यमध्ये कीटस्य सुरेन्द्रस्य सुरालये । समाना जीविताकांक्षा समं मृत्युभयं द्वयोः ॥ ९२ ॥

---

१. नयाशुभयोगैः ग । २. ततो भूपेन दाक्षिण्यात् पत्न्यै स्तेनः समर्पितः ॥

यो दद्यात्कांचन मेरु० ॥ ९३ ॥

ततो रूपवती प्राह सदयं तस्करं प्रति । अस्माभी रक्षितः सप्त दिनानि त्वं मलिम्लुच ॥ ९४ ॥

कल्ये को रक्षिता मृत्योर्भवन्तं तस्कराग्रणीः । तेन स्तैन्यं द्रुतं मुञ्च सुखसन्ततिदायकम् ॥ ९५ ॥

चौर्यपापद्रुमस्येह० ॥ ९६ ॥ दौर्भाग्यं प्रेष्यता दास्य० ॥ ९७ ॥

श्रुत्वैवं तस्करः पाप-भीतचेता जगाविति । अद्यप्रभृति नो कार्यं मया स्तैन्यं मनागपि ॥ ९८ ॥

गत्वा राज्ञी नृपोपान्ते प्राह स्वामिन् ? मलिम्लुचः । गृहीतनियमस्तैन्ये प्रसद्याद्य विमुच्यताम् ॥ ९९ ॥

ततो भूमिभुजा सद्यो देहमात्रोऽपि तस्करः । मुक्तोऽजनि सुखी बाढं पीनतनुस्त्वच्छविः खलु ॥ १०० ॥

गृहीत्वा नियमं देव्याः पार्श्वे स तस्करस्तदा । तृतीयकं व्रतं सम्यक् पालयामास संततम् ॥ १०१ ॥

आराध्य च व्रतं सम्यग् तृतीयं तस्करः सदा । स्वर्गलोकेऽभवद्देवो लसद्देहच्छविर्वरः ॥ १०२ ॥ यतः—

राज्यं सुसंपदो भोगाः कुले जन्म सुरूपता । देवत्वं जायते नृणां तृतीयव्रतपालनात् ॥ १०३ ॥

अवधिज्ञानतः पूर्वं भवं देवः स्मरन् निजम् । जज्ञावुपकृतं राज्ञी-कृतं चाभयदानतः ॥ १०४ ॥

ततस्तासामहं कृत्वो-पकारं भूपयोषिताम् । अभूवमनृणी दिव्य-रत्नदानात्कदा खलु ॥ १०५ ॥

मत्वेति स्वर्गतोऽभ्येत्य राज्ञीः सर्वाः प्रणम्य च । स्वरूपमात्मनः पूर्व-भवीयमुक्तवान् सुरः ॥ १०६ ॥

रूपवत्यै ददौ कोटि-मूल्यं हारं च कुण्डले । परासां नृपपत्नीनां द्वे द्वे च कुण्डले सुरः ॥ १०७ ॥

भूपाय मुकुटं दिव्यं सिंहासनसमन्वितम् । दत्त्वा नत्वा नृपं स्वर्गं जगाम निर्जरः क्षणात् ॥ १०८ ॥ यतः—
" पञ्चसु जिणकल्लाणेसु महरिसितवाणुभावाओ । जम्मंतर नेहेण य आगच्छन्ती सुरा इहयं ॥ १०९ ॥
संकंतदिव्वपेमा विसयपसत्ता समत्तकत्तव्वा । अणहीणमणुअकज्जा नरभवमसुहं न यंति सुरा ॥ ११० ॥
चत्तारि पञ्च जोयणसयाइं गंधो अ मणुअलोअस्स० ॥ १११ ॥
ततः शश्वद् ददद् दानं दीनादिभ्यो महीपतिः । अमायुद्घोषणां भूमौ कारयामास सर्वतः ॥ ११२ ॥
श्रृण्वन् धर्मं गुरूपान्ते चतुर्विधं प्रमोदतः । पत्नीयुक्तो नृपो दान–प्रभावात् स्वर्गमीयिवान् ॥ ११३ ॥
नृभवं प्राप्य भूपालः पत्नीभिस्सप्तभिर्युतः । कृत्वा कर्मक्षयं सिद्धि–सौख्यमापादयिष्यति ॥ ११४ ॥
एवं यो मनुजो दान–धर्ममाराधयिष्यति । स एव सपदि श्रेयः–सौख्यमापादयिष्यति ॥ ११५ ॥
धणसत्थवाहजम्मे जं घयदाणं कयं सुसाहूणं । तं कारणमुसभजिणो तेलुक्कपिआमहो जाओ ॥ ११६ ॥
करुणाइ दिन्नदाणं जम्मन्तरगहिअपुन्नकिरिआणं । तित्थयरचक्कीरिद्धिं सम्पत्तो संतिनाहो वि ॥ ११७ ॥
सिरिसेअंसकुमारो निस्सेअससामीओ कह न होइ । फासुअदाणपवाहो पयाओ जेण भरहम्मि ॥११८॥इत्यादिदानोपरि कथा
पालयन्ति सदा शील–व्रतं ये भव्यमानवाः । लभन्ते तेऽचिराद्धेम–वतीव शिवसंपदम् ॥ ११९ ॥
आसील्लक्ष्मीपुरे धीर–भूपतेर्न्यायशालिनः । प्रिया हेमवती शील–शालिनी लसदाशया ॥ १२० ॥

१ वाक्यं गुरोर्दान–धर्मं पुष्णन् चतुर्विधम् ॥

आदौ धर्मधुरंधरा कुटुम्बनिचये क्षीणे च सा धारिणी, विश्वासे च सखी हिते च भगिनी लज्जावशाच्च स्नुषा ।
व्याधौ शोकपरिप्लुते च जननी शय्यास्थिते कामिनी, त्रैलोक्येऽपि न विद्यते भुवि नृणां भार्यासमो बान्धवः ॥१२१॥
तयोर्धर्मं जिनेन्द्रोक्तं कुर्वतोर्गुरुसेवया । जगाम समयो भूयान् सदा सौख्यनिमग्नयोः ॥ १२२ ॥
वसन्तसमये हेम-वतीपत्नीयुतो नृपः । उद्याने क्रीडितुं वर्य-हर्षेऽन्येद्युः समीयिवान् ॥ १२३ ॥
कस्यचिदाननाद् हेम-वत्या रूपश्रियं वराम् । श्रुत्वाऽमितगतिर्विद्या-धरो हर्तुमुपागमत् ॥ १२४ ॥ यतः—
" भक्खाण सणी कम्माण मोहणी तह वयाण बंभवयं० ॥ १२५ ॥
क्रीडन्तीं कानने भूमि-पतेर्हेमवतीं प्रियाम् । हृत्वाऽमितगतिर्विद्या-धरो वैताढ्यमीयिवान् ॥ १२६ ॥
प्राहामितगतिर्हेम-वत्यत्र रूप्यपर्वते । दक्षिणोत्तरयोः श्रेण्याः पंचाशत्षष्टिसम्मिताः ॥ १२७ ॥
नगर्यः सन्ति भूयिष्ठ-विद्याधरविराजिताः । विद्याधरा लसद्विद्या-विदो रूपजितामराः ॥ १२८ ॥ [ युग्मम् ]
पुन्नागाशोकमाकन्द-चम्पकाद्यादिपादपान् । वापी-कूप-तटाकादि-स्थानकानि विलोकय ॥ १२९ ॥
रत्नवत्यां पुरि प्रौढ-रत्नपद्मावलीजुषि । विद्याभृत्सेवितो राज्यं कुर्वेऽहं सन्ततं सुखम् ॥ १३० ॥
इदं रत्नमयं सप्त-भूमिकं मम मन्दिरम् । इदं बहिर्वनं सर्व-ऋतुपुष्पफलाढ्यकम् ॥ १३१ ॥
प्रज्ञप्त्याद्या सदा देव्यो ददत्योऽभीप्सितं सुखम् । तिष्ठन्ति सन्निधौ स्फार-रूप-लावण्य-भासुराः ॥ १३२ ॥
अङ्गीकृत्य च मां हेम-वति ! त्वं स्वच्छमानसे । स्वेच्छयाऽनुभवोद्याना-दिषु शर्म मया समम् ॥ १३३ ॥

प्राह हेमवती मैवं वद विद्याधरेश्वर ! । परस्त्रीगमनाद् दुःखं लभते नरके नरः ॥ १३४ ॥ यतः —
स्वपतिं या परित्यज्य निस्त्रपोपपतिं भजेत् । तस्यां क्षणिकचित्तायां विस्रम्भो कोऽन्ययोषिति ॥ १३५ ॥
भीरोराकुलचित्तस्य दुःस्थितस्य रतस्त्रियाम् । रतिर्न युज्यते कर्तु-मुपशून्यं पशोरिव ॥ १३६ ॥
प्राणरान्देहजननं परमं वैरकारणम् । लोकद्वयविरुद्धं च परस्त्रीगमनं त्येजत् ॥ १३७ ॥
सर्वस्वहरणं बन्धं शरीरावयवच्छिदम् । मृतश्च नरकं घोरं लभते पारदारिकः ॥ १३८ ॥
विक्रमाक्रान्तविश्वोऽपि परस्त्रीषु रिरंसया । कृत्वा कुलक्षयं प्राप नरकं दशकन्धरः ॥ १३९ ॥
विद्याधरो जगौ हेम-वति ! त्वं मां द्रुतं वृणु । नो चेत् तव महानर्थो भविष्यति न संशयः ॥ १४० ॥
ततो हेमवती शील-रक्षार्थं कण्ठकन्दले । चिक्षेप यावता तावत्पुष्पमालाऽभवच्च सा ॥ १४१ ॥
शीलरक्षाकृते हेम-वत्यैवं भूरिशः स्वयम् । प्रकारान् विदधे आत्म-हत्यै धर्मपरायणा ॥ १४२ ॥
एवं तस्या महासत्या माहात्म्यं वीक्ष्य भूरिशः । पापं कर्तुमना विद्या-धरो न विरराम सः ॥ १४३ ॥
इतश्चक्रेश्वरी देवी मत्वा दुष्टाशयं च तम् । आगत्य हक्कयामास कर्कशैर्वचनैरिति ॥ १४४ ॥
रे पापिष्ठ ! न किं वेत्सि सतीं हेमवतीमिमाम् । विरुद्धं वदसि त्वं चेत् तदाऽनर्थो भविष्यति ॥ १४५ ॥
अस्याः शीलस्य माहात्म्यात् त्वं च भस्मीभविष्यसि । मन्यसे भगिनीं चेद्धि तदा ते कुशलं भवेत् ॥ १४६ ॥
हेमवत्याः सदा शीलं भङ्क्तुं यस्त्वं दुराशयः । करोष्युपक्रमं तत्ते भयं नैवास्ति मानसे ॥ १४७ ॥

हेमवत्याः पदौ नत्वा विद्याधरो जगावदः । त्वं भगिन्यस्यतो मे हि सन्मार्गस्थापनादिह ॥ १४८ ॥
दिव्यरत्नमये हार--कुण्डले विलसद्द्युती । हेमवत्यै ददौ विद्या--धरोऽमितगतिर्मुदा ॥ १४९ ॥
विमानस्थां ततो हेम वतीं कृत्वा खगेश्वरः । एत्य लक्ष्मीपुरे धीर--भूपाय प्रददौ मुदा ॥ १५० ॥
उक्त्वा च शीलमाहात्म्यं हेमवत्या नृपाग्रतः । ददौ दिव्यमणिहारं कुण्डले च नृपाय सः ॥ १५१ ॥
शीलमाहात्म्यतस्तस्मिन् भवे हेमवती यशः । लात्वा दीक्षां तपस्तप्त्वा सद्यः प्राप शिवश्रियम् ॥ १५२ ॥
सिरिउग्गसेणधूआ रायमई लहउ सीलवयरेहं । गिरिविवरगओ जीए रहनेमी ठाविओ मग्गे ॥ १५३ ॥ अत्रकथा—
पज्जलिओवि हु जलणो सीलपभावेण पाणिअं हवइ । सा जयउ जए सीआ जीसे पयडा जसपडाया ॥ १५४ ॥
चालिणिजलेण चंपाइ जीइ उग्घाडिअं दुवारतिगं । कस्स न हरेइ चित्तं तीए चरिअं सुभद्दाए ॥ १५५ ॥
हरिहरबंभपुरंदरमयभंजणपञ्चबाणबलदप्पो । लीलाइ जेण दलिओ स थूलभद्दो दिसउ भद्दं ॥ १५६ ॥
शश्वत्कुर्वंस्तपस्त्रीव नमस्कारादिभावतः । स्वर्गमुक्तिश्रियौ तेजःपुञ्जवल्लभते जनः ॥ १५७ ॥ तथाहि—
आसीच्चन्द्रपुरे चन्द्र--सेनाह्वमेदिनीपतेः । चन्द्रावतीप्रियाजाततेजःपुञ्जाभिधोऽङ्गजः ॥ १५८ ॥
स्तन्यपानादिना शश्वत् धात्रीभिः पञ्चभिः सुतः । पाल्यमानो वद्धये च सितपक्षशशाङ्कवत् ॥ १५९ ॥
भूभुजा पण्डितोपान्ते मुक्तः पुत्रः सदुत्सवम् । पूर्णेन्दुरिव जग्राह क्रमेण सकलाः कलाः ॥ १६० ॥
" जले तैलं खले गुह्यं पात्रे दानं मनागपि । प्राज्ञे शास्त्रं स्वयं याति विस्तारं वस्तुशक्तितः ॥ १६१ ॥

आहारनिद्राभयमैथुनानि० ॥ १६२ ॥
मातापित्रोः पदाम्भोजं सेवमानः सुभक्तितः । रञ्जयामास चेतांसि सर्वेषां विदुषां पुनः ॥ १६३ ॥ यतः--
" प्रीणाति यः सुचरितैः पितरं स पुत्रः० ॥ " १६४ ॥
जितशत्रुमहीशस्य तनयां रूपसुन्दरीम् । विस्तरान्नृपतिस्तेजःपुञ्जं च पर्यणीणयत् ॥ १६५ ॥
वितीर्य सूनवे राज्यं कृत्वा चाष्टाह्निकामहः । सप्रियोऽनशनं लात्वा चन्द्रसेनो दिवं ययौ ॥ १६६ ॥ यतः--
" तव निअमेण य मुक्खो दाणेण य हुंति उत्तमा भोगा । देवच्चणेण रज्जं अणसणमरणेण इंदत्तं ॥" १६७ ॥
ततः पूर्वार्जितश्रेयः--प्रभावाद् विषयान् बहून् । साधयन् कारयामास रिपून् सेवां निजां नृपः ॥ १६८ ॥ यतः--
आरोग्य--भाग्या--भ्युदय--प्रभुत्वं सत्त्वं शरीरे च जने महत्त्वम् । तत्त्वं च चित्ते सदने च संपत् सम्पद्यते पुण्यवशेन पुंसाम् ॥
आगतं बहिरुद्याने धर्मघोषं गुरूत्तमम् । श्रुत्वा भूपो ययौ धर्मं श्रोतुकामो लसन्मनाः ॥ १७० ॥
तिस्रः प्रदक्षिणा दत्त्वा वन्दित्वा विधिवद् गुरुम् । तेजःपुञ्जमहीपालो धर्मं श्रोतुमुपाविशत् ॥ १७१ ॥ तथा--
" अपि लभ्यते सुराज्यं लभ्यन्ते पुरवराणि रम्याणि । नहि लभ्यते विशुद्धः सर्वज्ञोक्तो महाधर्मः ॥ १७२ ॥
माणुस्स--खित्त--जाइ- कुल--रूवा--रुग्ग--माउअं बुद्धी । सवणग्गह--सद्धा संजमो अ लोगम्मि दुलहाइं ॥ १७३ ॥
आलस्स--मोह--वन्ना थंभा कोहा पमायकवणित्ता । भयसोगा अन्नाणा विक्खेवकोउहला रमणा ॥ १७४ ॥ इत्यादि--
व्याख्यान्ते नृपतिः प्राह स्वामिन् ! पूर्वभवे मया । किं कृतं सुकृतं येने--दृक्षं राज्यमभून्मम ॥ १७५ ॥

गुरुः प्राह महाभाग ! यत्कृतं सुकृतं त्वया । तत्सर्वं श्रूयतां साव–धानीभूयाधुना नृप ! ॥ १७६ ॥ तथाहि—
श्रीपुरेऽजनि दारिद्र्याभिभूतः कमलो वणिग् । कमला गृहिणी तस्याऽभवत् तिस्रः सुताः क्रमात् ॥ १७७॥
एवाहर्चितया तासां धनाभावादभूद् भृशम् । दुःखितः कमलः कुर्वन् कर्म परनिकेतने ॥ १७८ ॥
" जम्मतीए सोगो वड्ढंतीए अ वड्ढए चिंता । परिणीआए दंडो जुवइपिआ दुक्खिओ निच्चम् ॥ १७९ ॥
निअयरसोसा परगेहमण्डणी कलिकलङ्ककुलभवण । जेहिं न जाया धूआ ते सुहिआ जीवलोगम्मि ॥" १८० ॥
कमलेन सुतास्तिस्रः कष्टेन परिणायिता । जग्मेऽन्यदा गुरोः पार्श्वे धर्मं श्रोतुं सुचेतसा १८१ ॥ अत्र गुरूपदेशः—
यद् भक्तिः सर्वज्ञे यद्यतनस्तत्प्रणीतसिद्धान्ते । यत्पूजनं यतीनां फलमेतज्जीवितव्यस्य "॥ १८२ ॥
दानं सुपात्रे विशदं च शीलं तपो विचित्रं शुभभावना च । भवार्णवोत्तारणसत्तरण्डं धर्मं चतुर्धा मुनयो वदन्ति ॥१८३॥
कमलोऽवग् विना द्रव्यं दानं च दीयते कथम् । गुरुः प्राह विना लक्ष्मीं तपश्च क्रियते सदा ॥ १८४ ॥
कमलो नैगमः प्राह किं किंच क्रियते तपः । गुरुणोक्तं तपांसि स्युः सिद्धान्ते बहुभेदतः ॥ १८५ ॥
" पोरिसि–चउत्थ–छट्ठे काउं कम्मं खवन्ति जं मुणिणो । तं नो नारयजीवा वाससयसहस्सलक्खेहिं ॥ १८६ ॥
जे निच्चमप्पमत्ता गंठिं बंधंति गंठि सहिअंमि । सग्गापवग्गसुक्खं तेहिं निबद्धं सगंठिंमि ॥ १८७ ॥
तपः सकललक्ष्मीणां नियन्त्रणमशृङ्खलम् । दुरित–प्रेत–भूतानां रक्षामन्त्रो निरक्षरः ॥" १८८ ॥
श्रुत्वैतत्कमलः प्राहै–कान्तरः क्षपणो मया । कर्तव्यं गंठिसहितं प्रत्याख्यानं च भावतः ॥ १८९ ॥

यावज्जीवं तपः कुर्वन् गुरूक्तं विधिवत्सदा। मृत्वाऽभूत्प्रथमे स्वर्गे भासुरः कमलः सुरः ॥ १९० ॥ यतः—
" यद् दूरं यद् दुराराध्यं यच्च दूरे व्यवस्थितम् । तत्सर्वं तपसा साध्यं तपो हि दुरतिक्रमम् ॥" १९१ ॥
पूरितायुः सुरः स्वर्गात् च्युत्वा चन्द्रपुरेशितुः । चन्द्रसेनस्य पुत्रोऽभूत् त्वं चक्रतस्वप्नसूचितः ॥ १९२॥
पूर्वं कृतः तपःकल्प—वृक्षो राज्यश्रियाऽन्वया । फलितस्तव राजेन्द्र ! सद्यः सर्वेष्टदायकः ॥ १९३ ॥
गजा दशशतं जात्याः पञ्चलक्षतुरङ्गमाः । तावन्तः स्यन्दनाः कोटी पत्तयो बलशालिनः ॥ १९४ ॥
कोटाकोटी सुवर्णस्य रत्नानि च दशायुतम् । लक्षमूल्यानि मुक्तानां श्रियः पारं न पार्यते ॥ १९५ ॥ इत्यादि ॥ यतः—
" सर्वाः संपत्तयः सत्यं जायन्ते तस्य जन्मिनः । प्राग् जन्मोपार्जितं यस्य पुण्यद्रविणमूर्जितम् ॥" १९६ ॥
श्रुत्वैतद् भूपतिः प्राह स्वामिन्नद्य दिनान्मया । कर्तव्यं पूर्वभववत् तपो नित्यं स्वभावतः ॥ ९७ ॥
कुर्वन्तं नृपतिं तीव्रं तपो वीक्ष्याखिला जनाः । तपांसि कुर्वते शश्वत् विशेषाद् भक्तिपूर्वकम् ॥ १९८ ॥
श्रीसुन्दराय पुत्राय दत्त्वा राज्यं सदुत्सवम् । क्षेत्रेषु सप्तसु स्वीया श्रीरुप्ता भूभुजाऽऽदरात् ॥ १९९ ॥
लात्वा दीक्षां तपस्तीव्रं कृत्वा कर्मक्षयं क्षणात् । लब्धकेवलचित्तेजः—पुञ्जर्षिः प्राप निर्वृतिम् ॥ २०० ॥
" छट्ठं छट्ठेण तवं कुणमाणो पढमगणहरो भयवं । अक्खीणमहाणसीओ सिरिगोअमसामीओ जाओ ॥ २०१ ॥
सुणिऊण तवं सुन्दरिकुमरीए अंबिलाणि अणवरयं । सट्ठिं वाससहस्सा भण कस्स न कंपए हिअयं ॥२०२॥ इत्यादि—
विधुद्धां भावनां भव्या भावयन्तः स्वचेतसि । शिवभूप इवाद्वाय लभन्ते पदमव्ययम् ॥ २०३ ॥ [तपसि कथा ]

धीरस्तैनपुरे शूर-भूपस्य न्यायशालिन । अभूत् पद्माभवः पुत्र शिवाह्वो वरलक्षणः ॥ २०४ ॥
पाठित पण्डिताघान्ते पुत्र' पित्रा तथा शिव. । धर्मकर्मकलाः कल्या यथा अज्ञानशेषतः ॥ २०५ ॥ यत —
" जायम्मि जीवलोए दो चेव नरेण सिक्खिअव्वाइं । कम्मेण जेण जीवइ जेण मुओ सुग्गइ जाइ ॥ २०६ ।
श्रीपुरे धीरभूपस्य तनया श्रीमतीमम । शूरेण भूभुजा पुत्रः सम्यह परिणायितः ॥ २०७ ॥
प्रदाय सूनवे राज्य शूरो धर्मधुरन्धर' । आराधना विधायान्ते समिय' स्वर्गमोयिवान् ॥ २०८ ॥ यतः—
स्तधो मनमिच्छूना कामद' काममिच्छताम् । धर्मे एवापवर्गस्य पारम्पर्येण साधकः ॥ २०९ ॥
प्रेतकार्ये पितुः कृत्वा मुक्त्वा शोकं शिवो नृप । न्यायमार्गेण पृथिवीं पालयामास सादरम् ॥ २१० ॥ यतः—
" दुर्बलानामनाथानां बालवृद्धतपस्विनाम् । अन्यायै. परिभूताना सर्वेषा पार्थिवो गतिः ॥ २११ ॥
इतः सभास्थमुर्वीशं नत्वा कश्चिन्नरो जगौ । राजन् हीरपुर धीरो वैरी हत्वाऽधुना ययौ ॥ २१२ ॥
तत. सन्नह्य भूपालो जेतुं तं वैरिण रणे । अचालीद् भूरिहस्त्य-श्व-पदातिबलसयुतः ॥ २१३ ॥
तुरङ्गमखुरोत्खातरजोव्याप्तनभोङ्गणः । शोषयन् सलिल नद्या ययौ वैरिपुरान्तिके ॥ २१४ ॥
पु(पू)नाशनादाग। भूपं शिरं मत्वा रिपु. क्षणात् । सन्नह्य निर्ययौ पुर्या बहिः कर्तुं रणं क्रुधा ॥ २१५ ॥
द्वयो. कटकयोर्युद्धं जातोऽवैरिभूभुजा । यावच्छिन्नचमूर्भग्नाऽभिमुखा विहिता रणे ॥ २१६ ॥

१ श्रीमम ग । २. गुरु ग ।

यावच्छिवो बलं स्वीयं भग्नं दृष्ट्वा स्वयं क्षणात् । उत्थाय विग्रहं कर्तुं प्रवृत्तोऽरुणलोचनः ॥ २१७ ॥
ततः शिवो नृपो वैरिबलं वार्द्धिमिव क्षणात् । विलोड्य पक्षिवद् धीरं बबन्धाशु रणे रिपुम् ॥ २१८ ॥
धीरस्य विद्विषः सर्वे सेवकाश्च दिशोदिशम् । नंष्ट्वा ययुस्तमःपुञ्जा इव सूर्योदयेऽभितः ॥ २१९ ॥ यतः—
" तावच्चन्द्रबलं ततो ग्रहबलं ताराबलं भूबलम्, तावत्सिध्यति वाञ्छितार्थमखिलं तावज्जनः सज्जनः ।
मुद्रामण्डल–मन्त्र–तन्त्रमहिमा तावत्कृतं पौरुषं, यावत्पुण्यमिदं महद् विजयते पुण्यक्षये क्षीयते ॥ २२० ॥
वृक्षं क्षीणफलं त्यजन्ति विहगा शुष्कं सरः सारसाः० " ॥ २२१ ॥
मत्वेत्यरिः शिवं क्ष्मापं नत्वा भक्त्या जगावदः । राजन्निदं पुरं लाहि जातोऽस्मि तव सेवकः ॥ २२२ ॥
मम श्रीसुन्दरीं पुत्रीं त्वमङ्गीकुरु साम्प्रतम् । मां मुञ्च बन्धनात्सद्यः प्रसद्य शिवभूपते ! ॥ २२३ ॥
आकर्ण्यैतद् वचो भक्ति–गर्भितं शिवभूपतिः । प्रसन्नीभूय धीरारिं मुमोच बन्धनात् तदा ॥ २२४ ॥
" उत्तमानां प्रणामान्तः कोपो भवति निश्चितम् । नीचानां प्रणामेऽपि कोपः शाम्यति कर्हिचित् ॥" २२५ ॥
दत्तां श्रीसुन्दरीं धीर–भूपेन शिवभूपतिः । स्वीचकार रयात्पाणि–पीडनाल्लसदुत्सवम् ॥ २२६ ॥
दत्त्वा राज्यं च धीराय श्रीसुन्दर्या युतः शिवः । सुमहं स्वपुरे सौख्य–प्रयाणैराययौ शनैः ॥ २२७ ॥
श्रीसुन्दरी कृता राज्ञा पट्टराज्ञी लसद्गुणा । धर्मं चकार सर्वज्ञप्रोक्तं जीवदयामयम् ॥ २२८ ॥
" आसन्ने परमए पावेअव्वंमि० ॥ २२९ ॥

कुमारगिरिभूपालो मनाग् धर्मं व्यधान्नहि । सेवते स्म सदा सप्त व्यसनानि च दुर्मतिः ॥ २३० ॥
गृहेऽन्हि श्रीमती पुत्रे मासूत सुन्दराकृतिम् । कृत्वा जन्मोत्सवं सूनो-र्वीरेत्याह्वा नृपो ददौ ॥ २३१ ॥
आनन्दमानोऽनिशं पञ्चधात्रीभिस्तन्यपानतः । शुक्लपक्षे विधुरिव वर्द्धते स्म लसत्तनुः ॥ २३२ ॥
पञ्चत्वमन्यदाऽन्वेयुः श्रीमती शीलशालिनी । मृत्वा मान्तेऽभवत्स्वर्गे देवी भासुरदीधितिः ॥ २३३ ॥
अवधिज्ञानतो मत्वा स्वरूपं पूर्वसम्मतेः । बोधयितुं शिवं कान्तं समागाच्छ्रीमती सुरी ॥ २३४ ॥ यतः—
" पञ्चसु जिणकल्लाणेसु० ॥ " २३५ ॥
मान्सेटक-परस्त्रीद-मद्यपानादितत्परम् । लोकयुक्तं शिवं भूप ददर्श श्रीमती सुरी ॥ २३६ ॥ यतः—
" भूपे धर्मं वितन्वाने प्रजा धर्मं वितन्वते । भूपे पापं वितन्वाने पापं कुर्वन्ति मानवाः ॥ " २३७ ॥
तादृशं पतिमालोक्य दध्यावेवं सुरी हृदि । कथं मया पतिः पापा-न्निवार्यो भवति द्रुतम् ॥ २३८ ॥
" सामर्थ्ये सति यो मित्रं न निषेधति पापतः । तस्यात्मा तस्य पापेन लिप्यते वज्रलेपवत् ॥"२३९॥
मत्वेति श्रीमती देवी चाण्डालरूपधारिणी । मलक्लिन्नाम्बरा हस्ते नृरुपाले वितन्वती ॥ २४० ॥
बिभ्रती मदिरां मांसं भक्षयन्ती कुरूपभृत् । क्षिपत्यम्बुछटां राज-मार्गेऽचालीत् शनैः शनैः ॥ २४१ ॥
तादृशीं वनितां दृष्ट्वा सभास्थोऽवग् महीपतिः । मन्त्रिन्नियं छटां मार्गे चाण्डाली क्षिपते कथम् ? ॥ २४२ ॥
भूपादेशेन मन्त्रीशो गत्वा चाण्डालिकान्तिके । पप्रच्छेति तदा वारि-च्छटाक्षेपणकारणम् ॥ २४३ ॥

हस्ते नरकपालं ते मदिरामांसभक्षणे । भूपः पृच्छति चाण्डालि ! मार्गे किं क्षिप्यते छटा ॥ २४४ ॥
सभायामेत्य चाण्डाली श्रृण्वाने मेदिनीपतौ । प्रोवाचेति तदा चारु–तरगीर्वाणभाषया ॥ २४५ ॥
कूटसाक्षी मृषाभाषी कृतघ्नो दीर्घरोषणः । कदाचिच्चलितो मार्गे तेनेयं क्षिप्यते छटा ॥ २४६ ॥
आखेटक–परद्रोह–मद्यपानादितत्परः । कदाचिच्चलितो मार्गे तेनेयं क्षिप्यते छटा ॥ २४७ ॥
मन्त्री प्रोवाच चाण्डालि ! मैवं वदतु साम्प्रतम् । चाण्डाला नहि शुध्यन्ति वारिणा स्नपिता अपि ॥२४८॥चाण्डाली प्राह–
" कूटसाक्षी मृषाभाषी कृतघ्नो दीर्घरोषणः । मद्य–पापर्द्धिकृन्नीरै–र्न शुध्यति कदाचन ॥२४९॥ यतः पुराणेऽप्युक्तम्—
"चित्तमन्तर्गतं दुष्टं तीर्थस्नानैर्न शुध्यति । शतशोऽपि जलैर्धौतं सुराभाण्डमिवाशुचि ॥ २५० ॥
एतत्सर्वं महीशेन श्रुत्वा मन्त्रिमुखात्तदा । आकारिता नृपोपान्ते क्षिपन्ती आययौ छटाम् ॥ २५१ ॥
सभाया उपरि क्षिप्त्वा छटां तस्थौ च यावता । तावद् भृत्यान् क्रुधा हन्तु–मादिदेश च तां नृपः ॥ २५२ ॥
मार्यमाणाऽपि चाण्डाली छिन्ना भिन्ना च नो मनाग् । राजा दध्याविय नारी व्यन्तरी किन्नरी सुरी ॥ २५३ ॥
मानवी चेत्तदा मार्य–माणैवं म्रियते क्षणात् । तेनेयं किन्नरी देवी विद्यते नात्र संशयः ॥ २५४ ॥
देवतानां मया नूनं चक्रे आशातनाऽधुना । एतस्मात्पापनिचयात् मुच्ये(मोक्ष्ये)हमधमः कथम् ॥ २५५ ॥
चाण्डाली भूपतेर्धर्मा–नुगं वीक्ष्याशु मानसम् । चञ्चदाभरणा देवी–भूयास्थान्नृपतेः पुरः ॥ २५६ ॥
भूपः प्रोवाच काऽसि त्वं किमर्थमागता कुतः । देवी प्राहात्मनः सर्वं स्वरूपं पूर्वसंस्तुतेः ॥ २५७ ॥

चाण्डालीरूपनिर्माणा-दिकमेतन्मया कृतम् । भवतः प्रतिबोधाय त्वं जानीहीति भूपते ! ॥ २५८ ॥
राजाऽवग् देवि ! पापर्द्धि-र्मया मौढ्यात् कृता घना । तेन मे नरके पातो भविष्यत्यसुखप्रदः ॥ २५९ ॥
धर्मं जीवदयारूपं कृत्वा स्वर्गादिसौख्यदम् । त्वमभूर्देवता चारुसौख्यसन्ततिभाग् दिवि ॥ २६० ॥
श्रुत्वैवं भूपतिः सद्यः तत्याज व्यसनं क्षणात् । ततो देवी जगौ भूप ! पाल्या जीवदया दृढम् ॥ २६१ ॥ यतः—
" आसन्ने परमपए० ॥" २६२ ॥
स्थापयित्वा नृपं धर्म-वर्त्मनि श्रीमती तदा । भूपनन्दनयो रत्न-द्वयं दत्त्वा ययौ दिवि ॥ २६३ ॥
ततः प्रभृति भूपालः-स्त्यक्तव्यसनसप्तकः । शुभ्ररत्नमयं जैनं सद्म मध्येपुरं व्यधात् ॥ ॥ २६४ ॥
प्रासादे शान्तिनाथस्य प्रतिमाया महीपतिः । प्रतिष्ठां कारयामासा-कार्य सूरीन् सदुत्सवम् ॥ २६५ ॥
" धर्मादभ्यागतां लक्ष्मीं धर्मं एव नियोजयेत् । यतो धर्मस्य लक्ष्म्याश्च दत्ते वृद्धिं द्वयोरपि ॥ २६६॥
रम्यं येन जिनालयं निजभुजोपात्तेन कारापितं, मोक्षार्थं स्वधनेन शुद्धमनसा पुंसा सदाचारिणा ।
बद्धं तेन नरामरेन्द्रमहितं तीर्थेश्वराणां पदं, प्राप्तं जन्मफलं पुनर्जिनमतं गोत्रं समुद्योतितम् ॥" २६७॥
प्रासादप्रतिमायात्रा-प्रतिष्ठा च प्रभावना । अमार्योद्घोषणादीनि कारयामास भूपतिः ॥ २६८ ॥
अन्येद्युः शान्तिनाथस्य कृत्वाऽर्चां कुसुमैर्वरैः । ढौकयामास नैवेद्यं भूमीपतिर्मनोहरम् ॥२६९ ॥

---

१ मो पूर्वं कृतं पुण्यं मया मनाक् । तेनाभूवमहं हीनऋद्धिस्त्वत्तोऽधुना भुवि । ग

उदारैः स्तवनैर्भूमीपतिः शान्तिजिनेशितुः । गुणौघान् स्तोतुमारेभे भक्तिभावितमानसः ॥ २७० ॥ अत्र स्तुतिः ।
एकाग्र्याच्छिवभूपस्य भावयतश्च भावनाम् । बभूव केवलं ज्ञानं पुरः शान्तिजिनेशितुः ॥ २७१ ॥ यतः—
" प्रणिहन्ति क्षणार्द्धेन साम्यमालम्ब्य कर्म तत् । यन्न हन्यान्नरस्तीव्र–तपसा जन्मकोटिभिः ॥ " २७२ ॥
देवतादत्तलिङ्गेन शिवेन ज्ञानिना तदा । प्रबोध्य पृथिवीं मुक्ति–पुर्यां कर्मक्षयाद् गतम् ॥ २७३ ॥ यतः—
हत्थिपि समारूढा रिद्धिं दट्ठूण उसभसामिस्स । तक्खणसुहझाणेण मरुदेवी सामिणी सिद्धा ॥ " २७४ ॥
एवं ये भावनां भव्या भावयन्ति सदादरात् । लभन्ते केवलज्ञानं ते कृत्वा कर्मणां क्षयम् ॥ २७५ ॥

इति भावनोपरि शिवकथा ॥

आकर्ण्यैतन्नृपश्चित्त–चमत्कारकरं जगौ । अहो श्रीस्त्यागयोग्येयं भोगयोग्या सतां नहि ॥ २७६ ॥
" दायादाः स्पृहयन्ति तस्करगणा मुष्णन्ति भूमीभुजो, गृह्णन्ति छलमाकलय्य हुतभुग् भस्मीकरोति क्षणात् ।
अम्भः प्लावयति क्षितौ विनिहितं यक्षा हरन्ते हठात्, दुर्वृत्तास्तनया नयन्ति निधनं धिग् बह्वधीनं धनम् ॥२७७॥
आरोहन्ति सुखासनान्यपटवो नागान् हयान् तज्जुष–स्ताम्बूलाद्युपभुञ्जते नटविटा खादन्ति हस्त्यादयः ।
प्रासादे चटकादयो निवसन्त्येते न पात्रं स्तुतेः । स स्तुत्यो भुवने प्रयच्छति कृती लोकाय यः कामितम् ॥ " २७८ ॥
ध्यात्वेति विक्रमादित्यः श्रुत्वा दानफलं तदा । स्वर्ण–रूप्य–मणीदानै–रनृणीं मेदिनीं व्यधात् ॥ २७९ ॥
संवत्सरपरावर्त्तं कृत्वा वीरजिनेशितुः । निजं संवत्सरं चक्रे भूरिदानेन विक्रमः ॥ २८० ॥

परोपकारमालोक्य विक्रमार्कनरेशितुः । वासवोऽपि सभासीनः प्रोवाचेति सुराग्रतः ॥ २८१ ॥
"प्रायः सत्यपि विभवे सुरजनः स्वार्थी न दत्ते धनं, तीर्थान्नोद्धरति क्वचिन्न हरति व्याधीन्न हन्त्यापदम् ।
अप्यात्मंभरिभिर्जनैर्युगलिभिर्धन्यास्तु केचिन्नरा., सर्वाङ्गीणपरोपकारयशसा ये द्योतयन्ते जगत् ॥" २८२ ॥
अनृणीं वसुधां कृत्वा गतेषु मन्त्रिषु क्रमात् । प्राह श्रीविक्रमादित्यो भट्टमात्रं मति स्फुटम् ॥ २८३ ॥
अनृणी विहिता क्षोणी बहुलक्ष्मीप्रदानतः । किमत क्रियते मन्त्रिन् ! साम्प्रतं वद साम्प्रतम् ॥ २८४ ॥
भट्टमात्रो जगौ पूर्वं श्रीरामादिमहीभुजः । भूरिशो वसुधां जित्वा कीर्तिस्तम्भं व्यधुर्मुदा ॥ २८५ ॥
अतश्च क्रियते कीर्ति-स्तम्भो भूरिधनव्ययात् । राजा ततः समाकार्य सूत्रधारान् जगावदः ॥ २८६ ॥
गृहीत द्रविणं भूरि कीर्तिस्तम्भो विधीयताम् । भूपदत्त धनं लात्वा त कर्तुं ते प्रवर्त्तिताः ॥ २८७ ॥
इतो भूपो निशीथिन्यां नव्दचर्यां पुरि भ्रमन् । कृष्णविप्रगृहोपान्ते ययौ यावद्रहस्तदा ॥ २८८ ॥
तावत्तत्रागतौ युद्धं कुर्वाणौ षण्ड-सैरिभौ । पपात सङ्कटे राजा तयोर्दैवनियोगतः ॥ २८९ ॥
विनिद्रो वाडवोऽकस्मा-दुत्थाय गगनाङ्गणे । दृष्ट्वा दृष्टग्रहयुग-मेकत्रस्थं जगावदः ॥ २९० ॥
प्रिये ! उत्तिष्ठ दीपं त्वं कुर्वाशु कुरुषे चलिम् । सङ्कटेऽद्य महीशस्य पतितस्य मृत्यन्तये ॥ २९१॥
प्रिया प्राह सुताः सप्त वरयोग्याश्च सन्ति न । गृहे त्वयार्जन धान्यं विद्यते न प्रियानघ ॥ २९२ ॥

१ ०तमा तोणी. फ ।

अन्नं नास्ति पयो नास्ति नास्ति मुद्रा युगन्धरी । धान्यान्तर्लवणं नास्ति तन्नास्ति यन्न भुज्यते ॥ २९३ ॥
नृपतिः कारयन् कीर्ति–स्तम्भं न हीक्षते प्रजाः । दुःखिता विभवान्नाद्य–भावात् सन्त्यखिला ननु ॥ २९४ ॥
प्रायो निःस्वो जगन्निस्वं धनी धनयुतं स्फुटम् । सुखी सुखिनं लोकं मन्यते मनुजः किल ॥ २९५ ॥
द्विजः प्राह प्रिये ! भूपा आत्मीया हि भवन्ति न । तथापि जनता इष्ट–मिच्छन्ति मेदिनीपतेः ॥ २९६ ॥
स्वयमुत्थाय भूदेवो नृपस्य शान्तिहेतवे । चकार शान्तिकं लात्वा चारुपुष्पादिकं बलिम् ॥ २९७ ॥
ललायु–वृषभौ युद्धं विमुच्य जग्मतुः पृथग् । एतद् दृष्ट्वा नृपश्चिह्नं व्यधात् विप्रस्य सद्मनि ॥ २९८ ॥
गत्वा सौधं नृपः सुप्त्वा प्रातरुत्थाय संसदि । उपविश्य द्विजं ह्वातुं प्रेषयामास सेवकान् ॥ २९९ ॥
नृपस्याकारणं श्रुत्वा ब्राह्मणी प्राह भो पते ! । वरा शान्तिः कृता रात्रौ ययेदृक्षापदागमत् ॥ ३०० ॥
न ज्ञायते महीशः किं करिष्यत्यावयोश्छलात् । न भवन्ति महीपाला आत्मीयाः पोषिता अपि ॥ ३०१ ॥
श्रुत्वैतद् भूपतिर्धीरां दत्त्वाऽऽकार्य द्विजं तदा । पप्रच्छ मम किं विघ्नं भवत् ज्ञातं त्वया हृदः ॥ ३०२ ॥
द्विजः प्राह मया ज्ञातं विघ्नं लग्नबलात्तव । भूपोऽवक् किं स्वयं शान्तिः कृता मम द्विज ! त्वया ॥ ३०३ ॥
द्विजः प्राहोच्यते छत्र–छायायां यस्य भूपतेः । वाञ्छयते विजयं तस्य लोकैः सन्ततमादरात् ॥ ३०४ ॥
नैशं वृत्तान्तमुर्वीशः प्रकाश्य निजमञ्जसा । ब्राह्मणं प्रीणयामास भूरिलक्ष्मीप्रदानतः ॥ ३०५ ॥

१. कारयन् नृपतिः कीर्ति–स्तम्भं च नेक्षते.– क । २. भाषादत्र पुरान्तरे. क ।

द्विजाय भूपतिः सप्त-कन्योद्वाहकृते तदा । दापयामास द्रव्याणां सप्तलक्षं च मन्त्रिभिः ॥ ३०६ ॥
एवं द्विजं सुखीकृत्य लोकांश्च भूरिदानतः । कीर्तिस्तम्भं पुरे तत्र कारयामास रैव्ययात् ॥ ३०७ ॥

इति श्रीमत्तपागच्छनायकश्रीसोमसुन्दरपट्टालङ्करणश्रीमुनिसुन्दरसूरिशिष्यपण्डित
शुभशीलगणिविरचिते श्रीविक्रमादित्यविक्रमचरित्रचरित्रे श्रीसिद्धसेनगुरुकृत
प्रबोधवसुधाऽनृणीकरण-कीर्तिस्तम्भविरचनवर्णनस्वरूपः सप्तमः सर्गः ॥



